# दयानन्दमतम
# र्दनाख्योनिबन्धः

फगवाड़ानगरनिवासिप्राभाकरज्ञातीय
लवपुरस्थापरनामकराजकीयपाठशाल
धिकरणकसँस्कृताध्यापक श्रीपण्डितगो
विन्दरामनिर्मितः

दयानन्दसरस्वतीरचितवेदभाष्यप्रथमा
ङ्कस्यऋग्वेदादिभाष्यभूमिकाङ्कचतुष्टय
स्यखण्डनरूपः खण्डत्रयात्मकः

लालारामकृष्णदास महकमेडाईरेक्ट
रीकेकलारककी आज्ञानुसार


संबत १९३५ विक्र:
सन् १८७८ ईस्वी

पञ्जाबीयन्त्रलाहौरमेंमुनशीमहम्मद
अज़ीमयंत्राध्यक्षकेअधिकारसेमुद्रितहुआ

प्रथमसंस्करण.  मूल्य ।।) डाकमहसूलसहित.

ओम्

# ओंश्रीगणेशायनमः

नत्वाऽपूर्णामगाधबोधममलंवेदैकवेद्यंशिवं यस्मान्नित्यमु
त्पाद्विवर्त्ततइदंदेवादिरूपंजगत्। श्रीमन्माधवसम्प्रणी
तनिगमव्याख्याद्विषःकस्यचित् वेदस्यत्यनुगोपपत्तिभि
रसत्येयोवचोदूषये १ अथकश्चिद्दयानन्दसरस्वतीनाम
कः सन्यासिवेषधृग्द्विजोवर्णाश्रमधर्म्मव्यपेतः श्रीगङ्गादि
तीर्थानि शालग्रामशिलार्चन देवालयनिर्माणादीनिचसत्क
र्माणि विनिन्दन्स्मृतीतिहास पुराणादीनिपाषण्डजननि
र्मितानिचवदन् स्वस्यतद्भावानभिज्ञत्वेपि श्रीसायणमाध
वाचार्य्यादि कथितवेदार्थान्सर्वथादोषानपि दूषयन् जग
दुपचिकीर्षया परमात्मनानिर्मितानांवेदानांप्रसिद्धार्थ परि
त्यागेननिखिलजनभ्रामकानभिव्यक्त व्याकरणनिरुक्ता
दिविरुद्धार्थप्रतिपादनेन तेषामपिप्रतारकत्वमापादयन्
अज्ञजनव्यामोहायवेदभाष्यनामकमृग्वेदादिमन्त्राणाम
पव्याख्यानरूपं ग्रन्थंविरचय्यमुद्रयित्वेतस्ततःप्रेषितवा
न् तद्दृष्ट्वाज्ञजनहिताय सहृदयहृदयाह्लादायचाहं तस्मि
न्यथामतिसङ्क्षेपतोदोषोद्भावनंश्रुत्यादिमूलकयुक्तिभिः
करोमीति तत्रतावदयमृग्वेदादिमोमन्त्रः ॥

ओम् अग्निमीलेपुरोहितंयज्ञस्यदेवमृत्विजम्- होतारंरत्न
धातमम् ॥

अस्यार्थस्तु माधवाचार्यैरेवं कथितः अग्निनामकं देवमीलेस्तौमि मन्त्रस्यहोता

प्रयोज्यत्वादहं होतास्तौमीति लभ्यते कीदृश मग्निं यज्ञस्यपुरोहितम् यथा
राज्ञः पुरोहितस्तदभीष्टं सम्पादयति तथाग्निरपि यज्ञस्यापेक्षितं होमंसम्पाद
यति यद्वा यज्ञस्य सम्बन्धिनि पूर्वभागे आहवनीय रूपेण वस्थितम् पु·
की· देवं दानादिगुण युक्तम् पु· की होतार मृत्विजम् देवानां यज्ञेषु होतृ
नामक ऋत्विगग्निरेव तथाच श्रुतिः अग्निर्देवानां होतेति पु·की·रत्नधातम
म् यागफल रूपाणां रत्नानामतिशयेन धारयितारम् पोषयितारम्वेति-
यत्र दयानन्दः अथात्रप्रथमन्त्र ईश्वर एवार्थोऽग्नि शब्देन गृह्यतइति वदति-
तन्नसङ्गच्छते अग्निशब्द स्येश्वर शक्तिकत्वे प्रमाणाभावात् होतृयज्ञर्त्विक्पु
रोहित शब्दैः साहचर्यादत्राग्ने रेव देवताया ग्रहणस्यौचित्याच्च नचेदं मित्रं
वरुण मग्निमाहुरथो दिव्यः सस्सुपर्णो गरुत्मान् एकं सद्विप्रा बहुधा वदन्त्य
ग्निं यमंमातरिश्वा नमाहुरिति ऋ· अष्टक २ अध्याय ३ वर्ग २२ मंत्र ४६ मंत्रेण
कस्यसतः परब्रह्मण इन्द्रादीनि बहुधा नामानि सन्तीति वेदितव्य मित्यर्थ
के तदेवाग्निस्तदा दित्यस्तद्वायु स्तदु चंद्रमाः तदेवशुक्रं तद्ब्रह्मताआपः स
प्रजापतिरिति य· अ· ३२ मं १ मन्त्रेच यत्सच्चिदानन्दादि लक्षणं ब्रह्मतदेवा
ग्न्यादिनामवाच्य मित्यर्थकेग्न्यादि शब्दानामीश्वर वाचकत्वस्या भिधानात्
कथंतत्र प्रमाणाभावः प्रतिपाद्यत इतिवाच्यम् परमेश्वरस्येन्द्रादि रूपेण
वस्थितेरेवात्र निरूपणात् तत्राद्य मन्त्रगतस्यैकं सद्विप्रा बहुधा वदन्तीति
वाक्यस्यैकं सद्ब्रह्म बहुधा बहुप्रकार मिन्द्रादिरूपं विप्रावदन्तीत्ययमेवार्थो
युक्तः नहिनाम बाहुल्ये बहुप्रकारता कस्यचित्सम्भवति अन्यथेन्द्राग्न्या दीना
मपि बहुनामत्वेन बहुप्रकारता सम्भाव्येत ॥

किञ्च व्यभिचारा भावेन सतोविशेषणस्यैक मित्यस्याप्या नर्थक्यम् नामाधिक्ये
नैकत्वविघात सम्भावनाया एवानुदयेन सम्भव व्यभिचाराभ्यां स्याद्विशेषण
मर्थ वदति न्याय विरोधात् द्वितीयमंत्रेपि पुनःपुनस्तच्छब्द प्रयोग सामर्थ्येन
त कारभ्यांच तत्तद्देवता रूपेण प्रतिपादनम् त्वमेवमाताच पिता त्वमेवेत्यादि
वाक्ये त्वंस्त्रीत्वं पुमानसि त्वंकुमार उतवा कुमारी· त्वंजीर्णो दण्डेनवञ्चसित्वं
जातो भवसि विश्वतोमुख इति शारी· भा· अ· १ पाद २ श्रुतौचमात्रादि रू

पेणेत्यादिरूपेणोऽस्यास्य प्रतिपादनमिवेति अयमेवार्थो वाजसनेयिब्राह्
णेऽपि श्रूयते तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा हि विसृष्टि
रेष उ ह्येव सर्वे देवा इति कठवल्लीष्वपि पठ्यते एको वशी सर्वभूतान्तरात्मा
एकं रूपं बहुधा यः करोति इति क० व० ५ श्रु० १२ अत एव अहं वैश्वानरो भूत्वा
प्राणिनां देहमाश्रितः प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधमिति श्रीभ
गवद्गीतासूक्तं सङ्गच्छते किञ्च एक एव रुद्रो न द्वितीयोऽवतस्थ इति स
हस्राणि सहस्रशो ये रुद्रा अधि भूम्यामित्यनयोः श्रुत्योर्विरोधपरिहाराय
कस्यापि रुद्रस्य स्वमहिम्ना सहस्रमूर्तिस्वीकाराभ्युपगमवदन्यस्यैकस्यान
स्वमाहात्म्येनानेकेन्द्रादिदेवतास्वरूपेणावस्थितिरभ्युपगन्तुं शक्यते अन्य
च्च अग्न्यादिशब्दानामीश्वरवाचकत्वे यदि स्वीकृतं तु स्वरूपादिव्यवस्थाभेदेनस्था
न् व्यक्तिभेद एव तत्र भेदस्य सम्भाव्यमानत्वात् न द्वितीयत्वक्षतिस्तत्र नच
किन्तु तत्तद्व्यक्तीनामिति सुधियो विभावयन्तु अपिच उभा वामिन्द्राग्नी आ
हुवध्या उभा राधसः सह मादयध्यै उभा दाताराविषां रयीणामुभा वाज
स्य सातये हुवे वामिति यजु० अध्या० ३ मं० १३ मन्त्र इन्द्राग्न्योरुभयो रावाहना
दे हुवामीति द्विवचनप्रयोगस्य च भवन्मतेऽसंगतत्वम् इन्द्राग्निपदयो
र्द्वयोरपीश्वररूपार्थवाचकत्वात् द्वैतापत्तेः कोदेव इत्यादिश्रुतिविरोधाच्च अ
पिच यद्देवा देवहेडनं देवासश्चकृमा वयम् अग्निर्मा तस्मादेनसो विश्वान्मु
ञ्चत्वंहसः यजु० अ० २० इत्यादिकण्डिकात्रयेऽग्निवायुसूर्याणा
मपराधक्षमापनाय प्रार्थनाया अनुचितत्वम् होताय क्षदित्यादि यजु० अ० २१
मं० २९ एकादशमन्त्रेषु प्रत्येकदेवतावर्णनस्यापि तद्रूपकत्वे असंगतत्वमि
ति विभाव्यताम् किञ्च वेदस्य कार्त्स्न्येन मुख्यतया यदि ब्रह्मप्रतिपादनं त
र्ह्युपनिषद्भागे ब्रह्मविषयकप्रश्नाः कथं युज्येरन् अप्रयतत एव तस्य प्रतिपादनाद्
स्यादेतत् प्राणोऽग्निः परमात्मेति मैत्र्युपनिषदि प्र० ६ खं० ९ एष हि खल्वात्मे
शानः शम्भुर्भवो रुद्रः प्रजापतिर्विश्वसृक् हिरण्यगर्भः सत्यं प्राणो हंसः शा
स्ता विष्णुर्नारायणोऽर्कः सविता धाता विधाता सम्राडिन्द्र इन्दुरिति य एष तप
त्यग्निरिवाग्निना पिहितः सहस्राक्षेण हिरण्मयेनाण्डेन एष वा जिज्ञासित

योऽन्वेष्टव्यः सर्वभूतेभ्योऽभयं दत्वेत्यादि मैत्र्युपनिषदि च प्रपा० ६ खण्ड० ८
प्राणादीनीश्वरस्य नामानि श्रूयन्ते कथमुच्यतेऽग्निमीळे इत्यादावग्निशब्द
ईश्वरमभिधत्त इति चेन्नैवम् ॥

ईश्वरस्य सर्वदेवतारूपत्वेन तत्तद्देवताभिधायकशब्दानां गौण्या वृत्त्या के
षांचिच्छब्दानां स्तावकत्वेन योगवृत्त्या च विशेषणीभूय तस्मिन्प्रवृत्तावपि
रूढिर्योगमपहरतीति न्यायेन सन्निपाते योगाद्रूढेर्बलीयस्त्वेन रूढिवृ
त्तिलभ्यस्य तत्तद्देवतारूपस्यार्थस्यापलापयितुमशक्यत्वेनात्रत्याग्निपदस्य
होत्रादिप्रसिद्धपदसन्निहितस्याग्निदेवतारूपार्थे प्रसिद्धस्येश्वराभिधाय
कत्वकल्पनस्य निर्मूलत्वात् । अत एव मैत्र्युपनिषदि य एष तपत्यग्निरिवा
ग्निनापिहित इति वाक्येनापकृष्टसाधर्म्येणाग्निसादृश्यमीश्वरस्य मुखं च
न्द्र इतिवत्प्रतिपादितम् । किञ्च त्वदुक्ते तदेवाग्निरिति मन्त्रेऽग्निरित्यादि प
दानि शब्दपदार्थकानि वा लक्षणयाऽग्न्यादिशब्दवाच्यत्वाभिधायकानि वा
नाद्यः तदेवाग्निरित्यादौ तद्ब्रह्मैवाग्निशब्द इत्याद्याकारकबोधोदये नेश्वर
स्य त्वन्मतेऽग्न्यादिशब्दरूपत्वे पुरोहितादिविशेषणानां योग्यताभावेन
तस्मिन्ननन्वयात् शब्दस्य परिच्छिन्नत्वेन जन्यत्वेन च तस्मिन्ननित्यत्वा
पाताच्च न द्वितीयः सन्नियोगशिष्टत्वेनैवकारस्य सर्वत्रादित्यादिशब्दे
ष्वपि सम्बन्धात् देवाग्न्यादिशब्दवाच्यं नान्यदिति बोधस्यावश्यम्भा
वित्वेन य एष तपत्यग्निरिवेति मैत्र्युपनिषद्गतवाक्यस्याग्निपदस्य भौतिका
ग्निवाचकत्वाभावापत्त्या स्वेन स्वसादृश्यस्य वक्तुमशक्यतया द्वितीयेश्व
रस्यैव सादृश्यार्थं गृहीतुमुचितत्वेनाप्रसिद्धलक्षणापत्तेर्दुर्न्निवार्यत्वात्
भवदुक्तेश्वरनामबोधकमन्त्रादिस्थशब्देनराग्न्यादिपर्यायपुरुहूतम
घवसुत्रामजातवेदस्तनूनपादादिशब्दसहितमन्त्रेषु तनूनपाच्छुचि
व्रत इति यजु० अ० २१ मं० १३ सहसा जातान्प्रणुदा नः सपत्नान्प्र
जातान्जातवेदो नुदस्व । अधि नो ब्रूहि सुमनस्यमानो वयं स्याम प्रण
दा नः सपत्नानिति यजु० अ० १५ मं० २ युञ्जन्तु त्वा मरुतो विश्ववेदस
आतेत्वष्टापत्सुजवंदधातु यजु० अ० ९ मं० ८ इत्यादिषु बहुषु जात

वेदः प्रभृति शब्दानामीश्वर वाचकत्वाभावेनाग्न्यादि देवता वाचकत्व स्वीकारे ईश्व रएवोपास्यो नदेवादि रूप धारणमीश्वरः करोतीति भवन्मतस्यदत्त जलाञ्जलित्वा पत्तेश्च -

नचाग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तम इति ऋ॰ अ॰ १ ब्रह्मह्यग्निः श॰ अ यंवाअग्निः प्रजाश्च प्रजापतिश्च श॰ आत्मावाअग्निः श॰ अग्निर्वै देवानांव्रतपतिः श॰ नतुविद्वान्यदग्निः श॰ तेष्वभयेषु मर्त्येष्वग्निर्देवा मृतआस शत॰ इत्येतद्वाक्यप र्यालोचनया कविसत्यात्यन्तश्रवणप्रजापतिव्रतपति विद्यावत्त्वामृतत्वादी नि विशेषणानीश्वरएव भवितु मर्हन्तिनभौतिकेग्नाव सम्भवात् अयंवाअग्निरिति वाक्येच प्रजाशब्देनभौतिकोग्निः प्रजापतिशब्देनेश्वर इतिवाच्यम् ॥

आपेत्तिकामृतत्वविद्वत्तादीनां भौतिकाद्यभिमानिदेवतायामीश्वरेण स्थापितत्वा त् राजनिप्रजेश्वरत्वस्य सर्वसिद्धत्वेदेवानां प्रजेशत्वप्रतिपादनेदोषाभावाच्च अयं वाअग्निरितिवाक्ये एकस्याग्निशब्दस्य भौतिकाग्निपरमेश्वरयोर्वाचकस्य सकृदुच्च रितः शब्द एकमेवार्थंबोधयतीति भाष्यविरोधात्प्रजा प्रजापतिशब्दाभ्यां पृथगन्व यस्योपेक्ष्यत्वाच्च अग्निर्देवतामनुष्यादिषुभूमौच प्रजारूपेणदिविप्रजापतिरूपेणा वतिष्ठत इति तदर्थस्यनिरवद्यत्वाच्च -

स्यादेतत् यदिभौतिकाग्न्याद्यभिमानिदेवता सत्वेप्रमाणंभवेत्तद्देवतोपलभामह इ तिचेन्मैवं वद- ॥

अभिमानिव्यपदेश स्तु विशेषानुगतिभ्यामिति भगवताबादरायणे न अ॰ १ पा॰ सूत्रितत्वात् ॥

अस्यायमर्थः नन्वचेतनानामपिभूतेन्द्रियाणां चेतनत्वंक्वचिच्छ्रूयते यथामृदब्र वीदापोब्रुवन्निति तत्तेजऐक्षततात्आपऐक्षन्तेतिभूतविषये तेहेमेप्राणाअहंश्रेय सेविवद मानाब्रह्मजग्मुरिति तेहवाचमूचुस्त्वन्नोउद्गायेतीन्द्रिय विषयइत्या शङ्क्याह अभिमानिव्यपदेशस्त्विति तुशब्द आशङ्कामपनुदति नखलुमृदब्रवी दित्येवंजातीयकयाश्रुत्या भूतेन्द्रियाणांचेतनत्वमाशङ्कनीयम् यतोभिमानिव्य पदेशएषमृदाद्यभिमानिन्योवागाद्यभिमानिन्यश्च देवता वदनसम्वदनादिषुचे तनोचितेषु व्यवहारेषु व्यपदिश्यन्तेन भूतेन्द्रियमात्रम्- कुतः

विशेषानुगतिभ्याम् विशेषोहि भोक्तॄणां भूतेन्द्रियाणां चचेतनानां चेतनप्रविभाग
लक्षणः प्रागभिहितः सर्वचेतनतायां चासौ नोपपद्येत अपिच कौषीतकिनः प्राणस
म्वादे करणमात्राशङ्काविनिवृत्तये धिष्ठातृचेतनपरिग्रहाय देवताशब्देन विशिंष
न्ति एताह वै देवता अहंश्रेयसे विवदमाना इति तावा एताः सर्वा देवताः प्राणेन
श्रेयसे विदित्वेति च अनुगताश्च सर्वत्राभिमानिन्यश्चेतना देवता मन्त्रार्थवादेति
हासपुराणादिभ्योवगम्यन्ते अग्निर्वाग्भूत्वा मुखं प्राविशदित्येवमादिका च श्रुतिः
करणेष्वनुग्राहिका देवता मनुगतां दर्शयति प्राणसम्वाद वाक्यशेषे च ते ह प्राणाः प्र
जापतिं पितरमेत्योचुरिति श्रेष्ठत्वनिर्द्धारणाय प्रजापतिगमनं तद्वचनाच्चैकैको
त्क्रमणेनान्वयव्यतिरेकाभ्यां प्राणश्रेष्ठ्यप्रतिपत्तिस्तस्मै बलिहरणमिति चैवं जाती
यकोस्मदादिष्विव व्यवहारोनुगम्यमानोभिमानि व्यपदेशं द्रढयति तत्केनरोधते
त्यपि परस्या एव देवताया अधिष्ठात्र्याः स्वविकारेष्वनुगताया इयमीक्षा व्यपदिश्य
त इति द्रष्टव्यम् किञ्च ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदि
त्यादिति श्रुतौ ऋग्वेद प्रवर्त्तकत्वस्याग्नेः प्रतिपादनात्तादृशोप्यग्नौ न विद्यावत्त्वस
म्भव इति महत्कुतूहलम् वाय्वादित्ययोः पृथग्ग्रहणान्नात्रेश्वरार्थस्य ग्रहणा
म् अपिच यं यं क्रतुमधीते तेन तेनास्येष्टं भवत्यग्नेर्वायोरादित्यस्य सायुज्यं ग
च्छतीति माधवभाष्यस्य श्रुतौ तत्प्रवर्त्तकाग्न्यादि सायुज्य रूपेष्टप्राप्ति
तद्वेदाध्येतॄणां प्रतिपादितासा त्वन्मते विरुध्येत जडसायुज्यस्येष्टत्वाभावात्
अपिच अग्निर्वै सर्वा देवता इत्याद्यैतरेयब्राह्मणश्रुतावग्निशब्देनेश्वरोभिधीयते भौतिको
ग्निर्वा न प्रथमः इन्द्रादीनि तस्य नामानि ते इन्द्रादि रूपधारी परमेश्वर इति त्वदु
क्तेस्तस्य सर्वदेवतारूपत्वाङ्गीकारे सर्वसारग्रन्थविरोधेन व्याहतत्वात् न द्वितीयः
जडस्याग्नेः सर्वरूपत्वायोगात् आत्मैव देवताः सर्वाः सर्वमात्मन्यवस्थितमि
ति मनुवचनमत्र प्रमाणमिति न वदंस्त्वं कथं न लज्जसे त्वदीयसर्वग्रन्थस्य सर्वस्या
नेन गलहस्तितत्वात् प्रशासितारं सर्वेषामणीयांसमणोरपि रुक्माभं स्वप्नधीग
म्यं विद्यात्तं पुरुषं परम् १ एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् - इन्द्रमेके परे

णामपरं ब्रह्म शाश्वतमिति अ १२ श्लो० १२२। १२३ मनुवाक्यद्वयमपि नास्मा
कं प्रतिकूलम् ब्रह्मण एव सर्वदेवतारूपत्वमिति वाजसनेयि ब्राह्मणानुरोधि
भिरस्माभिः प्रतिपादनात् किञ्चात्रापि देवताशब्दस्य विद्वदर्थकत्वम् इन्द्राद्य
र्थकत्वम्वा नाद्यः अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्येत्या
दिना वाजसनेयि ब्राह्मणे शाकल्य याज्ञवल्क्य सम्वादे देवताविस्तारसङ्क्षेप
स्वरूपाणां निर्णीतत्वेन यजुर्वेदे अ १४ मं० २० अग्निर्देवता वातो देवतेति म
न्त्रेपि पृथक् पृथक् देवतानामभिधानेन छान्दोग्योपनिषद्यपि देवा ॐ ह्यमनु
ष्या ॐ ह्यपस्यू ॐ ह्यवया ॐ सिचेत्यादिना च मनुष्यातिरिक्तत्वेन देवानां प्रतिपा
दनात् तदेषाभ्युक्ता ये अर्वाङुत वा पुराणे वेदं विद्वांसमभितो वदन्त्यादित्यमे
व ते परिवदन्ति सर्वे अग्निं द्वितीयं तृतीयं च हंसमिति यावतीर्वै देवतास्ताः सर्वा
वेदविदि ब्राह्मणे वसन्ति तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यान्ना
श्लीलं कीर्त्तयेदेता एव देवताः प्रीणातीति रौहिकाख्यकं वेदव्रात फलं नैत्ति
रीया मन्त्रोदाहरणेन तदीयतात्पर्य्याभिधायि ब्राह्मणेन च स्पष्टीचक्रुः अर्वा
ङ् अर्वाचीनकाले पुराणे पुरातनकाले वेदं विद्वांसं वेदार्थाभिज्ञं अभितो वदन्ति वि
द्यास्तु दूषयन्ति हंसमहन्यहनि गच्छतीति हंसो वायुः अत्रेदं विचार्य्यम् यदि विद्व
दतिरिक्तदेवतानामभविष्यंस्तदा विद्वद्दूषणेनादित्यादीनां दूषणं विदुषि सर्व
देवता वसन्तीति तत्प्रीणनेनाखिलदेवताप्रीणनञ्चनावक्ष्यन् न हि द्वितीयः स्व
एव ग्रन्थविरोधात् इति एतेनाग्न्यादिदेवानां जडत्वप्रतिपादनमपि स्वजाड्य
व्यञ्जकमेव भीषास्माद्वातः पवते भीषोदेति सूर्य्यः इति श्रुतेः भयादस्याग्नि
स्तपति भयात्तपति सूर्य्यः भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चम इति का
ठकोपनिषदि च वल्लीद्वये तेषां भयाधारत्वप्रतिपादनात् न हि जडानाम्भयाधार
त्वं सम्भवति न वा तत्रेश्वरार्थस्य ग्रहणम् तस्य सभयत्वाङ्गीकारे लैकदूषण पा
षाणवर्षण प्रसङ्गात् ॥

किञ्चाग्न्यादिदेवतानामचेतनत्वे य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो
न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृत
इति शारीरक भाष्यस्य श्रुत्यर्थनिर्णायके भेदव्यपदेशाच्चान्य इति बादरायण

दयानन्दमतमर्द्दनम् ॥

प्रणीतसूत्रैर्वेदितुः सूर्य्यादन्योन्तर्यामीति सिद्धान्तोपिप्रकुप्येत- अपिच
यदीन्द्रवाय्वादिशब्दैर्वेदमन्त्रेष्वीश्वर एवोच्येत तदाग्नेयीयमृगैन्द्रीयमृगि
त्यादिसङ्केतः सास्यदेवतेति पाणिनिसूत्रंच निरर्थकं स्याज्जडानामग्न्यादी
नामनर्च्यत्वेन तत्रतेषामप्रतिपाद्यतया ब्रह्मणएवतत्तच्छब्दैरभिधीयमान
त्वेनसर्वाभिर्ऋग्भिः सर्वत्रोपस्थानंयुज्येत ताभिःसर्वाभिस्तस्यैवनिरूपणा
त् तथाचाग्नेय्याग्नीध्रमुपतिष्ठतेति आग्नावैष्णवंपुरोडाशंनिर्वपतिदीक्षणी
यायामित्याद्याः कर्मकाण्डगताविधयोविरुध्येरन् अग्निविष्णुशब्दयोःपर्य्याय
त्वात् अतएवभगवता जैमिनिनापिसूत्रितम् लिङ्गोपदेशश्चतदर्थवदिति
अस्यायमर्थः आग्नेय्याग्नीध्रमुपतिष्ठतेतिश्रूयते अग्निर्देवतायस्याऋचः
सेयमाग्नेयी तयाग्नीध्रस्थानमुपतिष्ठेतेति तदर्थः अत्रह्युपस्थानमुपदिश
द्ब्राह्मणमग्नेनयेत्यनयोपतिष्ठेतेतिमन्त्रप्रतीकंपठित्वानोपदिशति यदाय
स्यामृच्यग्निः प्राधान्येनप्रतिपाद्यते तदातस्याऋचोग्निर्देवताभवति तयास
त्याग्नेय्येतिदेवता वाचितद्धितान्तनिर्देशउपपद्यते तस्मादयमुपदेशस्तन्म
न्त्रवाक्यमर्थवदितिबोधयति अतोविवक्षितार्थत्वादर्थप्रत्यायनार्थं प्रयोगका
लेमन्त्रोच्चारणमिति तस्मान्नाचेतना अग्न्यादयोदेवतानाप्यग्न्यादिपदैरीश्वर
स्यग्रहणमग्निमीळ इत्यादिमन्त्रेष्विति सिद्धम् ॥

यत्तुदयानन्दः निरुक्तेग्निशब्दस्याग्रणीरितिनिर्वचनादग्रणीः सर्वोत्तमः
सर्वेषुयज्ञेषु पूर्वमीश्वरस्यैवप्रतिपादनादीश्वरस्यात्रग्रहणम् दग्धादि
तिविशेषणाद्भौतिकस्याग्नेरपीति ॥

तदतितुच्छम् निरुक्तार्थापरिज्ञानात् इत्थंहिनिरुक्तम् अथातोनुक्रमि
ष्यामोग्निः पृथिवीस्थानस्तंप्रथमंव्याख्यास्यामोग्निः कस्मादग्रणीर्भवत्य
ग्रंयज्ञेषुप्रणीयतेऽङ्गंनयतिसन्नममानोऽक्नोपनोभवतीतिनि· ७।३।१
स्थौलाष्ठीविर्नक्नोपयतिनस्नेहयतित्रिभ्य आख्यातेभ्योजायतइतिशा
कपूणिः इतादक्ताद्दग्धाद्वानीतात् सखल्वेतेरकारमादत्ते गकारमनक्ते
र्वादहतेर्वानीः परस्तस्यैषाभवतीति अत्रपृथिवीस्थानः पृथिवीलोकस्थो
ग्निरित्युपक्रम्य तस्यैषाभवतीत्युपसंहारादग्निर्देवतैवनपरदेवतेत्यत्रता

त्पर्य्ययास्कस्यकथमन्यथा पृथिवीस्थान इति वदेत् नहीश्वरः पृथिवीस्थानोद्यु स्थानोवा तस्यसर्वं गतत्वात् कस्मात्तह्यग्निनिमित्तादग्निशब्देन देवताभिधीय ते इतिप्रश्नस्योत्तरमग्रणीरित्यादिकम् देवसेनामग्रेस्वयन्नयतीत्यग्रणीरित्येकं प्रवृत्तिनिमित्तं तथाच ब्राह्मणान्तरम् अग्निर्वैदेवानां सेनानीरिति एतदेवा भिप्रेत्य बह्वृचोमन्त्रब्राह्मणे आमनन्ति अग्निर्मुखंप्रथमो देवतानामितिमन्त्रः अग्निर्वैदेवानामवमइतिब्राह्मणम् तथातैत्तिरेयाआमनन्ति अग्निरग्रेप्रथमो देवतानामितिमन्त्रः अग्निरवमो देवतानामितिब्राह्मणम् वाजसनेयिनस्त्वेव मामनन्ति सएववाएषोग्रेदेवतानामजायत तस्मादग्निर्नामेति यत्तेषुयज्ञस्य पूर्वदिग्वर्त्याहवनीयदेशं प्रतिगार्हपत्यात्प्रणीयतइति द्वितीयं प्रवृत्तिनिमि त्तम्- सन्नममानःसम्यक्स्वयमग्रह्वी भवन्त्वं अङ्गंस्वकीयशरीरन्नयतिकाष्ठ दाहेहविःपाकेचप्रेरयतीति तृतीयं प्रवृत्तिनिमित्तम्- स्थूलाष्ठीविनामकस्य महर्षेः पक्षोनिरुक्तकारः कश्चिदक्नोपनइत्यग्निशब्दं निर्वक्ति तत्रनक्नोपयती त्युक्तेनस्नेहयति किन्तुकाष्ठादिकंरूक्षयतीत्युक्तम् शाकपूणिमतेतुयज्ञभू मिङ्गत्वा स्वकीयमङ्गंङ्गाष्ठदाहेहविःपाकेचप्रेरयतीतिधातुत्रयजोर्थः त स्मान्निरुक्तस्योपक्रमोपसंहाराभ्यामङ्गंङ्गयतीतिनिर्वचनेनचानक्तिदह त्योरन्यतरस्माद्वा तोगकारादानीतयाचात्रपदोक्तमन्त्रब्राह्मणपर्यालोच नयाचस्पष्टमग्निदेवतायाग्रहणमुपपद्यतइति विदाङ्कुर्वन्तुविद्वांसः नि रुक्तेस्मिन्नुपसंहारे तस्यैषाभवतीत्यत्रतस्येत्येकवचननिर्देशादीश्वरस्यवा ग्नेर्वाग्रहणस्योपपन्नत्वेनभौतिकस्याग्नेरपीहग्रहणमित्यस्य सर्वथानु चितत्वमित्यपिबोध्यम् किञ्च दग्धादितिविशेषणादित्यपिनयुक्तम् दग्धादित्यस्यविशेषणत्वाभावात् भौतिकाग्नेर्दाहकत्वेनदग्धत्वस्यास म्भवात् दहतेरुत्पन्नादग्धशब्दादु कारस्योपादानमितितदाशयात्- अपरञ्च अक्ताद्दग्धाद्वा गकारमनक्तेर्वादहतेर्वेत्यत्रवाग्रहणादेतयो र्मध्यात्कस्माच्चिद्वानीतैच्छिकं गकारस्योपादानमिहेति शाकपूणे रभिमतत्वेनवह्निवाचकाग्निशब्देधातुद्वयान्यतरोपात्तगकारेणात्सिद्धौ ईश्वरवाचकस्य तस्यानक्त्युपात्तगकारेण यथाकथञ्चि

त्सिद्धावपि दहत्युपात्त गकारेणसिद्धेर्भवत्कल्पितार्थे निरुक्तविरोधो दुर्निवार्य्य एवेति ॥

यत्तु अञ्चु गतिपूजनयोः । गम्लृप्रापणे । अगि गत्यर्थः । इण् गतौ इत्यादिधातुभ्योऽग्निशब्दः सिद्ध्यति अञ्चति । अच्यते । जानाति । ज्ञायते । गच्छति । गम्यते प्राप्नोति प्राप्यते सत्करोति पूजयति । सत्क्रियते पूज्यते नयति प्राप्नोति । नीयते प्राप्यते धर्मात्मा जनो विद्वान् तथा विद्वद्भिर्धर्मात्मभिर्मुमुक्षुभिश्चेत्यादि व्याकरणनिरुक्तप्रमाणैरर्थमग्निशब्देन परमेश्वरग्रहणेऽसुषूक्तिर्गम्यत इति वदति दयानन्दः ॥

तन्त्वर्थतया प्रलपितं तन्मन्नानाम् अनक्तेर्देवतिष्ठादिनारोधादिकस्याञ्जुव्यक्तिम्रक्षणकान्तिगतिषु इति पाणिनिमित्रपरिभाषितस्याञ्जिधातोर्गकारस्योपादाने नाग्निशब्दसिद्धिं वदता निरुक्तकारेण गतिपूजनार्थकाञ्चतेर्ग्रहणमकुर्वता सह तदुक्तेर्विरुद्धत्वात् प्रापणार्थकस्य नयतेर्नयति प्राप्नोतीति विवरणस्य व्याकरणविरुद्धत्वाच्च धात्वर्थानां त्रयाणां परस्परान्वयं विनैकपदीभूयैकार्थप्रतिपादनस्यापि शाब्दिकशैलीप्रतिकूलत्वाच्च त्रिभ्य आख्यातेभ्यो जायत इति वचनानुरोधेन धातुत्रयादेकैकवर्णग्रहणेन परस्परान्वितधातुत्रयार्थाश्रयत्वभूमिष्ठत्वाङ्गं स्वशरीरं हविः पाके काष्ठदाहे च नयति प्रेरयतीत्यात्मकादग्निवाचकाग्निशब्दसिद्धेर्वैयाकरणमतानुरोधित्वेपि अञ्चत्यच्यत इत्याद्यैकैकधातुनास्वतन्त्रेण तत्साधनस्यानुचितत्वाच्च अन्यथा तद्दीत्याएत्याद्यैकैकधातुलभ्यैकैकवर्णैनैव तदर्थोपलब्धौ वाकाङ्क्षाभावेन धात्वन्तरलब्धवर्णयोर्वैयर्थ्याच्च त्यलम् । यत्तु तत्कर्मभजते यत्सेह विनिरूप्यत इत्यादिनिरुक्तमप्यग्नि-

दभिमानि देवतयोरुभयोर्ग्रहणमित्यत्र प्रमाणम् ।

एतामृचं यास्क एवं व्याख्यातवान् अग्निमीलेऽग्निं याचामीति ईलिरध्येषणा कर्मा पूजाकर्मा वा । पुरोहितो व्याख्यातो यज्ञस्य देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वायो देवः सा देवता होतारं देवानामाह्वातारम् जुहोते होतेत्यौर्णवाभः रत्नधातमम् रमणीयानां धनानां दातारम्

नम मिति- ॥

इत्यंहि निरुक्ततात्पर्य्यम् यद्यप्यग्निः पृथिवीस्थानस्तथापि देवान्प्रतिह वि
र्वहनात् द्युस्थान इत्युक्तम् देवशब्देन दानदीपनद्योतनानामन्यतममर्थमा
चष्टे तथाच यस्तस्यदातादीपयिताद्योतयिता यमग्निरित्युक्तम्भवति दीपन
द्योतनयोरेकार्थत्वेप्याकृतिधातुभेदः देवदेवताशब्दयोरेकपर्य्यायत्वाम्मन्त्र
प्रतिपाद्याग्निव्यतिरिक्ता देवतानान्वेषणीयेति एवञ्च हेदयानन्द यदि
निरुक्तम्प्रमाणम्मन्यसे तदानिरुक्तकारयास्कक्तन्व्याख्यानन्देवाङ्गान
कर्त्रादिलिङ्गेनाग्नि देवतागमकत्वन्तेनस्वीकरोषि मतत्रेम्परार्थलेशोपि
यथावेदस्वीकृतानिस्मृतीतिहासपुराणादीनि नस्वीकरोषितथानिरुक्त
मपित्यजस्वकपोल कल्पनयैव मूर्खान्रञ्जय ॥

यत्तु गौणमुख्ययोर्मुख्येकार्य सम्प्रत्ययइति व्याकरण परिभाषयाग्निश
ब्दस्येश्वरार्थकत्वमेव तस्यैवसर्वोत्तमत्वेनमुख्यत्वाग्रणीत्वादिति वदति ॥
तन्न व्याकरणरीत्यास्याः परिभाषाया अत्रानुपयोगात् गुणादागतोगौ
णः यथागोर्वाहीक इत्यत्रजाड्यादिगुणनिमित्तोर्थोवाहीक इति तथा
चाप्रसिद्धत्वञ्चैण लाक्षणिकत्वञ्चात्र गौणत्वमितिभाष्यकृतात्पर्य्यं
णाग्रणी शब्देनाहृशस्यगौणार्थस्याभावात् प्रत्युत मुखाद्दग्निरजायते
ति अग्निर्वै देवानां सेनानीरिति अग्निर्मुखम्प्रथमोदेवतानामिति सएववा
एषोग्रेदेवानामजायत तस्मादग्निर्नामेतिमन्त्र ब्राह्मणपर्यालोचनयाग्नि
देवतारूपार्थ एवास्य मुख्यत्वेनेश्वरेऽप्रसिद्धत्वात् भवतुनवमतेगौणमये
श्वरेग्निशब्दस्यप्रवृत्तिर्मुख्यत्वेनत्वग्रावेवयोगरूढत्वात् अग्रिधातोर्गत्य
र्थादङ्गेर्नलोपश्चेत्योणादिकः प्रत्ययोनिः इदित्वान्नुमागमेन प्राप्तस्यनका
रस्यलोपश्चअङ्गतिस्वर्गंगच्छतिदेवान्प्रतिहविर्नेतुमितिव्युत्पत्याचाग्नौ
प्रसिद्धत्वाच्चेति- ॥

यत्तु पुरोहितशब्दस्यार्थम्भकेरारम्भात्प्रथमेवविज्ञानादिदानेनैनञ्जीव
न्दधातीति परमात्मविशेषणत्वेनवदति तदतितुच्छम् ॥
यद्देवापिः शन्तनवे पुरोहित इत्येतामृचमुदाहृत्यपुरएनन्दधातीतिव्या

ख्यानस्य यास्ककृतस्य निरुक्त द्वितीयेऽध्याये स्पष्टमुपलभ्यमानत्वात् यो
रोहित्येऽस्यर्द्धमानस्य यज्ञानुष्ठानं विधाय तत्फलत्वेन पुर एनं दधत इ
ति तैत्तिरीय ब्राह्मणाच्च राजपुरोहित इव यज्ञापेक्षित होमसम्पादनेन
यज्ञपूर्वभागे आहवनीयरूपेणावस्थितत्वाच्चाग्नेरेव पुरोहित शब्दविशे
ष्यत्वात् पुरः पूर्वाह्णः कर्मकाण्डात्पुरो धीयत इति व्युत्पत्त्या पुरोहित
शब्दसिद्धो भाव प्रधानमाख्यातं सत्त्वप्रधानानि नामानीति वचनाज्ज्ञा
वस्य प्रधानत्वेन तस्य अग्नि शब्दार्थ विशेषणत्वा सम्भवात् तदर्थेऽप्रसिद्ध
त्वाच्च यो देवानाम्पुरोहित इति पुरुषसूक्ते बृहस्पति पुरोहिता इत्यादि
यजु० अ० २० मं० ११ मन्त्रे यस्याहमस्मि पुरोहित इति यजु० अ० ११ मं ८१
मन्त्रे चास्मदुक्तार्थे नैव व्यवहारात्- पुर एनं दधत इत्यस्य प्रत्यासत्त्या
एनम्पुरोहितन्यस्मात्पुरो दधते तस्मादयम्पुरोहित इत्यर्थ कार्यप्रस्ता
च्च अत एवाग्निं त्वम्पुरो दधे इति यजु० अ० २२ मं० १७ मन्त्रे निरूपक
मिम दर्शनं सर्वकम्पुरोहित शब्दार्थो दर्शित इति सुधीभिराकलनीयम्-
यत्तु यज्ञस्य जगतः देवं सूर्य्यादीनाम्प्रकाशकमिति विवृणोति-
तन्न सम्यक् पञ्चदश सु यज्ञनामसु मखः यज्ञः विष्णुरिति पठितत्वात्
देवता शब्दस्य देवयोनौ रूढत्वाच्च यौगिक शब्दातिरिक्त शब्दानामा
नुशासनिकार्थ एव शक्तिग्रहस्य सम्भवात् शक्तिग्रहं व्याकरणोपमा
नेत्याद्युदयनाचार्य्य वचनात् निरुक्तशार्थ्ये शास्त्रीय प्रक्रिया विनाशाच्च
यत्तु ऋत्विजमित्यस्य ऋतुपूज्यम् होतारमित्यस्य सर्वपदार्थदा
तारमिति विवृतिं करोति- ॥

तन्न वेद प्रसिद्धयोस्तदर्थयोस्त्यागेनाप्रसिद्धान्यार्थ कल्पनस्यान्याय्य
त्वात् अग्निर्देवानां होतेति श्रुतौ देवानां यज्ञेषु होतृनामक ऋत्विक्त्वेनाग्ने
रेव प्रतिपादनात् देवानामाह्वातारमिति वदतो निरुक्तकारस्य तदर्थावि
रोधित्वाच्च और्णनाभमतेऽपि होम निष्पादकत्वेन होतृत्व सम्भवाच्च ऋ
तौ यजतीत्यर्थे ऋत्विगिति सूत्रेण निपातनात्कर्मणि क्विनोऽयुक्तत्वे
नास्मिन्नर्थे स्यासुङ्गतत्वाच्च- ॥

ऋचान्त्वः पोषमास्ते पुपुष्वान् गायत्रन्त्वो गायति शक्करीषु ब्रह्मा
त्वो वदति जातविद्यां यज्ञस्य मात्रां विमिमीत उ त्व इति-

अस्या ऋचस्तात्पर्यं निरुक्तकारो यास्कः सङ्क्षिप्य दर्शयति इत्यृत्विक्क
र्मणां विनियोगमाचष्ट इति पुनरपि स एव विवृणोति ऋचामेकः पो
षमास्ते पुपुष्वान् होतार्चनीति प्रथमपादम् गायत्रमेको गायति
शक्करीषूद्गाता गायत्रं गायतेः स्तुतिकर्म्मणः शक्कर्य ऋचः शक्नोते
स्तद्यदाभिर्वृत्रमशकद्धन्तुं तच्छक्करीणां शक्करीत्वमिति द्वितीयपादम्
ब्रह्मैको जाते जाते विद्यां वदति ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्ह
तीति तृतीयम् यज्ञस्य मात्रां विमिमीते एकोऽध्वर्युरध्वर्युरध्वरयुः अध्वरं युनक्ति
अध्वरस्य नेतेति चतुर्थम् तत्र प्रथमपादनिरुक्तस्यायमर्थः त्वशब्द एक
पर्यायो होतृविशेषणम् होतृनामक एक ऋत्विक् यज्ञकाले स्वकीयवेद
गतानामृचां पुष्टिं कुर्वन्नास्ते भिन्नप्रदेशोत्पन्नानामृचां सङ्घातमेक
त्र समाहृत्य तावद्देशस्थमिति पुष्टिं करोति सेयं पुष्टिः अर्चतीत्यनुम
र्चमृक्शब्द आचष्टे अर्च्यतेऽप्रशस्यतेऽनया देवविशेषः क्रियाविशेषस्त
त्साधनविशेषो वेति ऋक्छब्दव्युत्पत्तिरिति- एवं चानया ऋचानेन नि
रुक्तेन होतृद्गातृब्रह्माध्वर्युनामकानां चतुर्णामृत्विजां यथायथं स्वस्वक
र्मणि विनियोगस्य निरूपणान्मन्त्रनिरुक्तव्याकरणविरुद्धस्य मुग्धप्र
इत्याकारकार्थस्य सर्वथा सुधीभिर्हेयत्वमित्यलम्-

अस्याग्निमील इति मन्त्रस्य द्वितीयोऽर्थस्तु दयानन्दकृतः सर्वथान
न्वितः- ॥

तेषु नेष्वर्थेषु तेषां पदानां सङ्गमाभावात् निरुक्तकाराद्यस्वीकृतत्वाच्च
वृषोऽग्निः शत० अग्निर्वा अश्वः श० अश्वो ह वा एष भूत्वा देवेभ्यो यज्ञं व
हतीति श० तूर्णिर्हव्यवाडिति श० अग्निर्वै योनिर्यज्ञस्येति श० तं तो
देवा एनं त्वजन्दहस्तुरित्यादौ श० अग्न्यधिष्ठानं देवताया एव ग्रहण
नु भौतिकाग्नेर्जडस्येति सर्वकामवर्षणाद्वृषः -स्वर्गस्य देवेभ्य इन्द्र
[illegible] - ॥

साम =५
अनुक्तं=
स्वरूपं=

यत्तुवदतिभौतिकाग्निर्नामाग्न इति

तद्भ्रान्तिमूलकम् अग्नेर्भूतेति वाक्यस्य यस्यादग्न्यवदाग्नुगमनयुगणयोगात्स्वाहानिके गुणवन्तद्द इतिवन्नस्मिन्त्रयुक्तत्वात् अग्निमीलेग्नियाचामीति ईलिरध्येषणाकर्मोपजाकर्मावेतिनिरुक्तकारयास्कृतव्याख्यानात् पर्येषणापरीष्टिश्चान्वेषणान्गवेषणा- सनिस्त्वध्येषणायाञ्चाभिशस्तिर्याचनार्थेनेतिकोशाच्च अम० कां० २ व्र० व० श्लोक ३२ ईलेर्याञ्चापरपर्याध्येषणार्थेपि अन्वेषणार्थत्वेत्रमानाभावाद्गुणानामग्नेरन्वेषणंकुर्वेइ इतिव्याख्यानन्निरस्क्रियते - पुरोहितशब्दस्यशिल्पविद्यामयगुणधारके यत्तशिल्पविद्यादिक्रियाजन्यबोधसङ्गते देवस्यव्यावहारिकविद्याप्रकाशके ऋत्विजः सर्वशिल्यादिव्यवहारविद्याद्योतनार्ह होतृशब्दस्य तद्विद्यादिगुणानांदातर्ययादातरिचलोकवेदयोरप्रसिद्धत्वात् पुनरुक्तिग्रस्तत्वाच्चायमर्थोमूर्खरञ्जक एवेतिशिष्टैर्हेयः एतादृशानां लौकिकफलानांकर्मणामीश्वरदत्तबुद्धया स्वयमेवज्ञातुंशक्यानां वेदस्यतज्ज्ञापकत्वायोगात् अनधिगतार्थज्ञापकत्वाद्वेदस्यतस्मैतादृशार्थकत्वेवेदत्वमेवविहन्येत अलौकिकंपुरुषार्थवेदयनेनेतितन्नामनिर्वचनात् तथाचोक्तम् प्रत्यक्षेणानुमित्यावायस्तूपायोनबुध्यते एतंविदन्तिवेदेनतस्माद्वेदस्यवेदतेति अतएवपुरुषार्थानुशासने जैमिनीयेसूत्रितम् धर्मब्रह्मणीवेदैकवेद्येइति बहुजन्मभोग्यैहिकराज्यपुत्रपत्नीधनसुखादिप्रापकपारलौकिक स्वर्गब्रह्मलोकादिप्रदायकचित्तशुद्धिद्वारकमोक्षहेतुकेश्वरान्नैकत्तानोपपादकानामग्निहोत्रादिकर्मोपास्तिविज्ञानानांतत्रप्रतिपाद्यत्वात् ईश्वरनिर्मितपदार्थगुणानांप्रत्यक्षेणोत्तुभूयमानत्वाच्च तस्मादुपहास्यदंहितीयोर्थइत्यपरम्परा एतावताप्रबन्धेनास्माझीकांकर्मकाण्डस्तनादिकमस्मादयोदेवाश्चेतनांहस्तपादादिमन्तियहवनीयञ्ज्ञादावागच्छन्तिविहन्मनुष्यास्तेभ्योभिन्नाईश्वरएवतन्तद्देवतारूपइति सिद्धान्तितम् -

यत्तुदयानन्दः सपर्यगाच्छुक्रमकायमव्रणमितीशावास्योपनिषद्गतमन्त्रप्रमाणात्कयमीश्वरोदेवादिदेहंदधातीतिवदति -

तन्नस्यादीश्वरस्याकायत्वे पीच्छावशात्मायामयंरूपंसाधकानामनुग्रहायेति अन्तस्तद्धर्मोपदेशादिति अ० १ सू० २० पा० १ वैयासिकेसूत्रेसिद्धान्तितत्वात् शारी

रिकेभाष्यस्मृतिरियमुपपन्यस्ता तद्यथा इदमाम्नायते अथयएषोन्तरादित्ये
हिरण्मयः पुरुषोदृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्वएव सु
वर्णस्तस्य यथाकप्यासं पुण्डरीकमेवमक्षिणी तस्योदितिनाम स एषसर्वेभ्य :
पाप्मभ्य उदित उदेतिह वै सर्वेभ्यः पाप्मभ्यो य एवं वेदेत्याधिदेवतमथाध्यात्मम्
य एषोन्तरक्षिणि पुरुषो दृश्यत इत्यादि अन्येपिबहवो मन्त्राः रुद्राध्याये
नमोस्तु नीलग्रीवाय सहस्राक्षायेत्यादयः सहस्रशीर्षा पुरुषः सहस्राक्षः सह
स्रपादित्यादयो बहवो वेदे विद्यन्ते -

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् - समूढमस्य पांसुरे ऋ·
अ· २ सू· २२ अनु· ५ ऋ· १७ इति मन्त्रे त्रिविक्रमावतारधारिणो
विष्णोः सशरीरस्य ग्रहणम् -

अस्यार्थः त्रिविक्रमावतारधारी विष्णुरिदं प्रतीयमानं सर्वं जगदुद्दिश्य विशेष
णपादक्रमणं कृतवान् त्रेधा पृथिव्यामन्तरिक्षे दिवि पदं स्थापितवान् पां
सुरे धूलियुक्ते पादस्थाने समूढं इदं सर्वं जगत्तस्यान्तर्भूतम् इयमृग्या
स्केनैवं व्याख्याता विष्णुर्विशतेर्वा व्यश्नोतेर्वा यदिदं किञ्च तद्विक्रमते विष्णु
स्त्रिधा निधत्ते पदम् त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः समा
रोहणे विष्णुपदे गयशिरसीत्यौर्णनाभः समूढमस्य प्यायनेन्तरिक्षे पदं न दृश्य
ते अपि वोपमार्थे स्यात् समूढमस्य पांसुर इव पदं न दृश्यत इति पांसवः पादैः सू
यन्त इति वा पन्नाः शेरत इति वा पिंशनीया भवन्तीति वा इति - अन्यो मन्त्रः तत्रै
व म ५० ६८ ॥

त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः - अतो धर्माणि धारयन् -
इति गोपा सर्वं जगद्रक्षकः अदाभ्यः केनापि हिंसितुमशक्यः धर्माणि अग्निहो
त्रादीनि धारयन् पोषयन् - अन्यो मन्त्रस्तत्रैव -

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे - इन्द्रस्य युज्यः सखा १९
पस्पशे सर्वो यजमानः स्पृष्टवान् स्पश बाधनस्पर्शनयोः लिट् युज्यः अत्रकृत :
विष्णोरिन्द्रात्तद्भूत्वं वृत्राहननयज्ञ इन्त्यनुवाके अथैवैनं हि विष्णुरित्यादिना
प्रपञ्चेनैतैरीयाम्नामनतिद्रुत दिवि विष्णुर्व्यक्रंस्त जागतेन छन्दसा त

तोनिर्भक्तो यो स्मान्द्वेष्टि यं च वयं द्विष्मोन्तरिक्षे विष्णुर्व्यक्रंस्त त्रैष्टुभेन च्छन्दसा ततः एवंवत् पृथिव्यां विष्णुर्व्यक्रंस्त गायत्रेण च्छन्दसा ततः एवंवत् इति यजु॰ य॰ अ॰ २ मं॰ २५ एते मन्त्रास्त्रिविक्रमावतारधारिणो नारायणस्य पादाक्रमणप्रतिपादकाः सन्ति- ॥

सामवेदीयकेनोपनिषदि खं॰ ३ ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति १ तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानन्त किमिदं यक्षमिति २ तेऽग्निमब्रुवञ्जातवेद एतद्विजानीहि किमेतद्यक्षमिति तथेति ३ तदभ्यद्रवत्तमभ्यवदत्कोऽसीत्यग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ४ तस्मिंस्त्वयि किं वीर्यमित्यपीदं सर्वं दहेयं यदिदं पृथिव्यामिति ५ तस्मै तृणं निदधावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ६ अथ वायुमब्रुवन्वायवेतद्विजानीहि किमेतद्यक्षमिति तथेति ७ तदभ्यद्रवत्तमभ्यवदत्कोऽसीति वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति ८ तस्मिंस्त्वयि किं वीर्यमित्यपीदं सर्वमाददीयं यदिदं पृथिव्यामिति ९ तस्मै तृणं निदधावेतदादत्स्वेति तदुपप्रेयाय सर्वजवेन तन्न शशाकादातुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति १० अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति तथेति तदभ्यद्रवत्तस्मात्तिरोदधे ११ स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं तां होवाच किमेतद्यक्षमिति १२ खं॰ ४ सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो हैव विदाञ्चकार ब्रह्मेति १ तस्माद्वा एते देवा अतितरामिवान्यान्देवान् यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पर्शुस्ते ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति २ तस्माद्वा इन्द्रोऽतितरामिवान्यान्देवान् स ह्येनन्नेदिष्ठं पस्पर्श स ह्येनत्प्रथमो विदाञ्चकार ब्रह्मेति ३ तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा इतीन्न्यमीमिषदा इत्यधिदैवतम् ४ अथा-

दयानन्दमतमर्दनम् ॥

ध्यात्मं यदेतद्गच्छतीव च मनो नेन चैतदुपस्मरत्यभीक्ष्णं सङ्कल्पः ५
तद्ध तद्वनं नाम तद्वनमित्युपासितव्यं स य एतदेवं वेदाऽभिहैनं सर्वाणि
भूतानि सम्वाञ्छन्ति ६ ॥

आसां श्रुतीनामयमर्थः सङ्क्षेपतः अविज्ञातत्वाद् ब्रह्मासदिति मन्दबुद्धि
व्यामोहापनोदाय वा ब्रह्म सर्वप्रणेतृ देवानामपि देवः देवासुरयोर्जयाजय
हेतुरिति ख्यापनाय वा ब्रह्मज्ञानादेवाग्न्यादीनां देवेभ्यः श्रेष्ठत्वमिति
ज्ञापनाय वा दुर्विज्ञेयत्वनिरूपणार्थं वा कर्तृत्वाद्यभिमानस्य मिथ्यात्वप्रदर्शना
य वेयमाख्यायिका - ब्रह्म सच्चिदानन्दलक्षणं ह किल देवेभ्यो विजिग्ये जयं
लब्धवत् देवासुरसङ्ग्रामे जवादरातीनीश्वरसेतुभेत्तॄनसुरान् विजित्य देवेभ्यो
जयं तत्फलं च प्रायच्छज्जगतः स्थेम्ने तस्य ह किल ब्रह्मणो विजये देवा अग्न्या
दयोऽमहीयन्त महिमानं प्राप्नुवन् तदात्मस्थस्य प्रत्यगात्मन ईश्वरस्य सर्व
क्रियाफलसंयोजयितुः प्राणिनां सर्वचेष्टाकर्तुर्जगतः स्थितिं चिकीर्षोरयं जयो
महिमा चेत्यजानन्तस्ते देवा ऐक्षन्त अग्न्यादिस्वरूपपरिच्छिन्नात्मकृतोऽस्मा
कमेवायं विजयो महिमा च जयफलभूतोऽस्माभिरनुभूयते नास्मत्प्रत्यगात्म
भूतेश्वरकृत इति १ तद्ध किलैषां मिथ्येक्षणं विजज्ञौ विज्ञातवद् ब्रह्म - सर्वेक्षि
तृ हि तत्सर्वभूतकरणप्रयोक्तृत्वाद्देवानां च मिथ्याज्ञानमुपलभ्य मैवासुरवन्मि
थ्याभिमानात्पराजयेरन्निति तदनुकम्पया देवान्मिथ्याभिमानापनोदने
नानुगृह्णीयामिति तेभ्यो देवेभ्यः ह किलार्थाय प्रादुर्बभूव स्वकीयमाहा
त्म्य निर्मितेनातिविस्मापनीयेन रूपेण देवानामिन्द्रियगोचरे प्रादुर्बभूव तत्प्रा
दुर्भूतम् ब्रह्म न व्यजानन्त नाविज्ञातवन्तो देवाः किमिदं यक्ष्यं महद्भूतमिति २
ते तदजानन्तो देवाः सान्तर्भयास्तद्विजिज्ञासवोऽग्निमग्रगामिनं जातवेदस
म् सर्वज्ञकल्पमब्रुवन् हे जातवेद एतदस्मद्गोचरस्थं यक्षं विजानीहि विशे
षतो बुध्यस्व तथास्त्विति ३ तद्यक्षमभ्यद्रवत्तत्प्रतिगतवानग्निः तं पिप्र
च्छिषुं तत्समीपेऽप्रगल्भत्वात्तूष्णीभूतं अग्निं तद्यक्षमभाषत कोऽसीति एवं
ब्रह्मणा पृष्टोऽग्निरब्रवीत् अग्निर्नामाहं वै प्रसिद्धो जातवेदा इति च नामद्वयेन प्रसि
द्धत यात्मानं श्लाघयन्निति ४ तद्ब्रह्मावोचत्तस्मिन्नेवं प्रसिद्धगुणे नामवति

त्वयि किं सामर्थ्यम् सोऽब्रवीदिदं जगत्सर्वं दहेयं भस्मीकुर्य्यां यदिदं स्थावरादि
पृथिव्यां पृथिव्यामित्यन्तरिक्षस्याप्युपलक्षणं ५ तस्मै एवमभिमानव
ते ब्रह्म तृणं निदधौ अग्नेः पुरः स्थापितवद्ब्रह्म एतत्तृणमात्रं ममाग्रतो द
ह न चेदस्य दग्धुं समर्थो मुञ्च दग्धृत्वाभिमानं सर्वत्रेत्युक्तः तत्तृणमुपप्रेया
य तृणसमीपं गत्वा सर्वजवेन सर्वोत्साहकृतेन वेगेन तच्छाक दग्धुं व्रीडितो हतप्र
तिज्ञस्तत एव यक्षाद्देवं तूष्णीं देवान्प्रति निववृते निहतः नैतदशकं विज्ञातुं श
क्तवानहम् ६ वानाद्गमनाद्गन्धनाद्वायुः मातर्य्यन्तरिक्षे श्वयतीति मातरि
श्वा ७-८ आददीय गृह्णीयाम् ९-१०-११ स्पष्टम्-तस्मादा
त्मसमीपगतादिन्द्रात् ब्रह्म तिरोभूतं इन्द्रत्वाभिमानोऽतितरां निराकर्तव्य इत्यतः
संवादमात्रमपि नादात्तस्मै ब्रह्म ११ यस्मिन्नाकाशप्रदेशे आत्मानं दर्शयित्वा ब्र
ह्म तिरोभूतं तत्र काले तत्रैवेन्द्रस्तस्थौ न निववृते ऽग्न्यादिवत् किमेतद्यक्षमिति ध्या
यन् इन्द्रस्य तस्मिन्भक्तिं बुद्ध्वा विद्या उमारूपिणी प्रादुरभूत् स्त्रीरूपा इन्द्रस्या ब
हुशोभमानतमां सुवर्णाभरणवतीमिव अथवा हिमवतः सुतां पार्वतीं सर्वज्ञेनेश्वरे
ण सार्द्धं नित्यं वर्तत इति ज्ञातुं समर्थाम् इति ज्ञात्वा तामुपजगाम शेषं स्पष्टम् १२ ईश्वरेण
जिता असुराः यूयं तत्र निमित्तमात्रं तस्य ब्रह्मणो विजये यूयं महीयध्वं महिमानं प्रा
प्नुथ एतदिति क्रियाविशेषणार्थम् तत उमावाक्यात् इन्द्रोऽवधारयत् हैवेति न
स्वातन्त्र्येण १ अन्यान्देवानतितरामतिशेरत इव यद्यत एते ह्यादयः संवाद
दर्शनादिना समीपं गताः नेदिष्ठमन्तिकं प्रेयतमं यस्पर्शुः एतद्ब्रह्म प्रथमः प्र
थमात्तन्न एतद्ब्रह्मेति विदाञ्चकुः २ अग्निवायुभ्यामिन्द्रस्तु तं ताभ्यां सर्वेइ
न्द्रेण श्रुतमत इन्द्रोऽतितरामिवेत्येवार्थकम् ३ तस्येति निरुपमस्य ब्रह्मणो ये
नोपमानेनोपदेशः सोऽयमादेशः आङ् इवार्थकः विद्युतो विद्योतनमिव न्यमीमि
षच्चक्षुषो विषयं प्रति प्रकाश तिरोभावाविवचेति अधिदैवतं देवताविषयं ब्रह्मण
उपमानम् ४ मन एतद्ब्रह्म गच्छतीव विषयीकरोतीव साधकोऽनेन मनसा एतद्ब्रह्म
समीपतः स्मरति मम मनो ब्रह्म प्रतिगच्छत्येवं तद्ध निचिन्तयेदित्युपदेशः मनसः
भृशं सङ्कल्पः ब्रह्मविषयः स्यादिति च ५ तद्ब्रह्म तस्य प्राणिजातस्य वनं सम्भ
जनीयं प्रत्यगात्मभूतत्वात् तद्वनमित्यनेनैव गुणाभिधानेनोपासितव्यं चिन्तनी

यम् नाम्नोपासकस्यफलमाह सयइत्यादिसप्तम् आस्वप्नेषुब्रह्मणोमायाम
यद्रूपस्याविर्भावतिरोभावौ अग्न्यादिदेवानाञ्चेतनत्वंविद्वन्मनुष्यातिरिक्तत्वं
स्पष्टमुपलभ्यते इतिविद्वद्भिरेतद्विचार्य्यप्रोच्यताङ्कथमीश्वरस्यमायोपाधिकं
स्वेच्छकंनरूपमिति एकमन्येषामप्यवताराणांमूलप्रमाणभूताबहवोमन्त्राः
सन्तिविस्तरभियात्रनलिख्यन्ते- ॥

यत्तुवदतिवेदईश्वरस्यैवप्रतिपादनंसर्वत्रनाग्न्यादीनांभौतिकानाञ्जडानामिति-
तन्मन्दम् अग्न्याद्यधिष्ठातृदिव्यशरीरावच्छिन्नचेतनदेवतानिरूपकबहुमन्त्र
विरोधात् तथाहि कस्यनूनङ्कतमस्यामृतानामिति ऋ॰ अ॰ २ सू॰ २४ म
न्त्रेमाधवभाष्येउक्तम् शुनःशेपोह्ययेवद्धःकान्दिशीकः कन्देवमुपधावामीति
चिकित्सति तथाचाम्नायते हन्ताहन्देवताउपधावामीति सप्रजापतिमेवदे
वतानांप्रथममुपससार तंप्रजापतिरुवाचाग्निर्देवानांनेदिष्ठस्तमेवोपधावेति
सोग्निमुपससाराग्नेर्वयंप्रथमस्यामृतानामित्येतयर्चेति ततोग्निरुवाचसवि
तावैप्रसवानामीशेतमेवोपधावेति ससवितारमुपससाराभित्वादेवसवि
तरित्यनेनतृचेनेति तंसवितोवाचवरुणायवैराज्ञेनियुक्तोसितमेवोपधा
वेति सवरुणंराजानमुपससारात उत्तराभिरेकत्रिंशतेति तंवरुणउवाचाग्नि
र्वैदेवानांमुखंसुहृदयतमस्तन्नुस्तुहि अथत्वोत्स्रक्ष्यामीति सोग्निन्तुष्टा
वातउत्तराभिर्द्वाविंशत्येति तमग्निरुवाचविश्वान्देवान्नुस्तुह्यथत्वोत्स्रक्ष्या
मीति सविश्वान्देवान्तुष्टावनमोमहद्भ्योनमोअर्भकेभ्यःनमोयुवभ्योनमो
आशिनेभ्यःयजामदेवान्यदिशक्नवाममाज्यायसःशंसमावृक्षिदेवाइत्येतय
र्चेति तंविश्वेदेवाऊचुरिन्द्रोवैदेवानामोजिष्ठोबलिष्ठःसहिष्ठःपारयिष्णु
तमस्तन्नुस्तुह्यथत्वोत्स्रक्ष्यामइति सइन्द्रन्तुष्टावयच्चिद्धिसत्यसोमपाइ
त्यनेनसमर्चेनसूक्तेनचोत्तरस्यपञ्चदशभिरिति तस्माइन्द्रःस्तूयमानःप्रीतो
मनसाहिरण्यरथन्ददौतमेतयर्चाप्रतीयाय शश्वदिन्द्रःपोप्रुथद्भिरिति
तमिन्द्रउवाचाश्विनौवैदेवानांभिषजौतौनुस्तुहि अथत्वोत्स्रक्ष्यामीतिसतु
ष्टावातउत्तरेणत्र्यृचेनेति तमश्विनावूचतुरुषसन्नुस्तुह्यथत्वोत्स्रक्ष्यावइ
ति सउषसन्तुष्टावातउत्तरेणत्र्यृचेनतस्यहस्मव्यृच्युक्तायांविपाशोमुमुचेग

शुनःशेपआ
जीगर्तिःसकृ
त्रिमोवैश्वामि
त्रोदेवरातइत्य
नुक्रमणिका
यामुक्तम्-१

दरो इत्वाक आसेति अत्रेदेवि चार्थ्यम् परमेश्वरस्यैव स्तुत्यत्वाङ्गीकारे प्रजापत्यादिभिर्नवभिर्देवताभिरेकैकस्य स्वस्मात्स्वस्मादुत्कृष्टतावर्णनेन मन्त्रैः शेफस्यतन्त्रस्तुतये प्रेरणं कथं न विरुध्येत - किञ्च ॥

**इन्द्रायाहि तूतुजान उप ब्रह्माणि हरिवः । सुते दधिष्व नश्चनः अ० अ० १ इन्द्र सूक्त० अ० ३ ॥**

अस्यार्थः हे हरिवः अश्वयुक्तेन्द्र हरिशब्दः इन्द्रसम्बन्धिनोरश्वयोर्नामधेयम् हरी इन्द्रस्य लोहितो मेरितितदीयाश्वनामत्वेन पठितत्वात् अतएवामरकोशेपि हरिहय इतीन्द्रनाम लोहिताश्वइत्यर्थे इति हरयोस्य सन्तीत्यस्मिन्नर्थे मदस्यास्त्यस्मिन्नस्तीति मतुप् छन्दसीरइति पा० ८ । २ । १५ मस्य वत्वम् सम्बुद्धौ उगिदचामिति नुम् संयोगान्तलोपेन कारस्य मतुव सोरुः सम्बुद्धौ छन्दसिपा ८ । ३ । १ इति मस्य वत्वम् - त्वन्तूतुजानः त्वरमाणः ब्रह्माणि वेदस्तुतिरूपाणि स्तोत्राणि उपेत्यमायाहि आगत्यास्मिन्सुते सोमाभिषवयुक्ते कर्मणि नः चनः अन्नं हविर्लक्षणं दधिष्व धारय स्वीकुर्वित्यर्थः चायेरन्ने ह्रस्वश्चेत्यसुन्नकारान्तत्वं यम् नेयलोपः - ॥

**अस्य पीत्वा शतक्रतो घनो वृत्राणामभवः प्रावो वाजेषु वाजिनम् अ० अ० १ सू० ४ हि० अनु० २ ॥**

अस्यार्थः हे शतक्रतो इन्द्र अस्य सोमस्यांशं पीत्वा वृत्रासुरप्रमुखानां शत्रूणां घनो हन्ता भव अभूः ततो वाजेषु सङ्ग्रामेषु वाजिनं सङ्ग्रामवन्तं स्वभक्तं प्रावः रक्षितवानसि - ॥ ॥

**ये स्तेनाये च तस्करास्तांस्ते अपि दधाम्यास्ये शु० य० अ० ११ मं ७७ ॥**

इत्यादि पञ्चमन्त्रेष्वमेरास्यदंष्ट्रा हनुजम्भवाहुबलानामनिरूपणम् तत्रैव द्रष्टव्यम् नहीश्वरस्याकायस्याश्वा स्तुतत्वं तत्र हन्तृत्वं आस्यादिमत्वं च सङ्गच्छते - ॥

**इन्द्रवायू इमे सुता उप प्रयोभिरागतम् इन्दवो वामुशन्ति हि अ० वायु सू० २ अ० १ मं ४** प्रयोभिरन्नैरस्मभ्यं दातव्यैः सहोपागतं अस्मत्समीपे प्रत्यागच्छतम् इन्दवः सोमा उपानिकामयन्ते - मद्विप्याधियानाः रतिवायविन्द्रश्च स्तुन्वतः आयातमुपनिष्कृतम् - मद्विप्याधियानाः रति

ऋ॰ वा॰ सू॰ २ मं॰ ३ अनु॰ १ अ॰ १ अस्यार्थः सुन्वतः यजमानस्य उपयातं आगच्छतम् निष्कृतं संस्कृतं सोमं हे नरौ सामर्थ्येनोपेतौ पुरुषौ युवयोरागतयोः सतोर्धिया ऽमुना कर्मणा मक्षु त्वरया संस्कारः सम्पत्स्यते इत्याः सत्यमत्र अपो मन्त्रयोर्हि वचनं च विरुध्येत –

यः कुक्षिः सोमपातमः समुद्र इव पिन्वते – उर्वीरापो न काकुदः ऋ॰ अ॰ १ अनु॰ ५ सू॰ ८ मं॰ ७ ॥ द

अत्रेन्द्रस्य कुक्षिप्रदेशस्योपादानम् समुद्रवर्द्धमानः कुक्षिः सुखसम्बन्धि जलमिव न शुष्यतीति – यद्यपि काकुञ्जिह्वेति निघण्टौ उक्तं तथाप्युदकसंबन्धसिद्ध्यर्थं काकुच्छब्देन मुखमुपलक्ष्यते अत्रेन्द्रस्य कुक्षिग्रहणम् – ॥

मत्स्वा सुशिप्र मन्दिभिः स्तोमेभिर्विश्वचर्षणे – सचैषु सवनेष्वा ऋ॰ अ॰ १ अनु॰ ३ सू॰ ९ मं॰ ३ ॥

अस्यार्थः हे सुशिप्र शोभनहनो वा शोभननासिक इन्द्र शिप्रे हनुनासिके चेति यास्कः मन्दिभिर्हर्षहेतुभिः स्तोमेभिः स्तोत्रैः आमत्स्व हृष्टो भव हे विश्वचर्षणे सर्वमनुष्ययुक्त यजमानैः सर्वैः सज्येत्यर्थः एषु यागगतेषु त्रिषु सवनेषु सचा देवैः शेषैः सह आगच्छेति शेषः अस्मिन्मन्त्रे इन्द्रस्य हनुनासिकयोर्ग्रहणम् – ॥ + ॥

आश्रुत्कर्ण श्रुधी हवं नू चिद्दधिष्व मे गिरः – इन्द्र स्तोममिमं मम कृष्वा युजश्चिदन्तरम् ऋ॰ अ॰ १ अनु॰ ३ सू॰ १० मं॰ ९ ॥

अस्यार्थः हे आश्रुत्कर्ण सर्वतः श्रोतारौ कर्णौ यस्य तादृशेन्द्र हवमस्मदीयमाह्वानं तु क्षिप्रं श्रुधि शृणु मम होतुर्गिरश्चित्स्तुतीरपि दधिष्व चित्ते धारय किञ्च मदीयमिमं स्तोत्रं युजश्चित्त्वदीयसख्युरप्यन्तरं कृष्व आसन्नं कुरु यथा सख्युः स्तुतिं प्रियं मन्यसे तद्वदस्मदीयस्तुतिष्वपि प्रीतिं कुर्वित्यर्थः आसमन्तात् श्रुणुत इत्याश्रुत् क्विप् ह्रस्वस्येति तुक् तादृशौ कर्णौ यस्य – अत्र मन्त्रे इन्द्रस्य कर्णयोरुपादानम् अतएव तस्य हूत्रवा इति नाम –

आ तू न इन्द्र कौशिक मन्दसानः सुतं पिब – नव्यमायुः प्रसूतिर कृधी सहस्रसामृषिम् ऋ॰ सू॰ १० अ॰ १ अनु॰ ३ ऋ॰ ११ ॥

अस्यार्थः हे इन्द्र त्वमितोऽस्मान्प्रत्यागच्छेति शेषः हे कौशिक कुशिकपुत्रेन्द्र मन्दसानो हृष्टो भूत्वा सुतमभिषुतं सोमं पिब यद्यपि विश्वामित्रः कुशिकपुत्रस्तथापि तद्रूपेणेन्द्रस्योत्पन्नत्वात्कुशिकपुत्रत्वमविरुद्धम् अयमर्थस्त्वनुक्रमणिकायामुक्तः कुशिकस्त्वैषीरथिरिन्द्रतुल्यं पुत्रमिच्छन् ब्रह्मचर्यं चचार तस्येन्द्र एव गाथी पुत्रो जज्ञ इति हे इन्द्र त्वं सर्वैर्देवैः स्तुत्यं कर्मानुष्ठानपरमायुर्जीवितं प्रसूतिरप्रकर्षेण सुष्टु वर्द्धय ततो मां सहस्रसङ्ख्याकलाभोपेतं ऋषिमतीन्द्रियद्रष्टारं कृधि कुरु तु संहितायां ऋचीत्यादि सूत्रेण दीर्घः — अत्र मन्त्रे कुशिकपुत्रत्वमिन्द्रस्य प्रतिपादितम् ॥

इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः — रथीतमं रथीनां वाजानां सत्पतिं पतिम् ऋ० अ० १ अनु० २ सू० ११ मं० १ — ॥

अस्यार्थः समुद्रवद्व्याप्तवन्तं इन्द्रं विश्वाः सर्वा गिरः वर्द्धितवन्तः की० रथीनां रथयुक्तानां योद्धॄणां मध्ये अतिशयेन रथयुक्तम् — वाजानामन्नानां स्वामिनम् सतां सन्मार्गवर्तिनां पालकम् — अस्मिन्मन्त्रे रथयुतत्वमिन्द्रस्योक्तम् — ॥

त्वं वलस्य गोमतोऽपावरद्रिवो विलम् — त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ऋ० अ० १ अनु० २ सू० ११ मं० ५ — ॥

अस्यार्थः वलनामकः कश्चिदसुरो देवसम्बन्धिनीर्गा अपहृत्य कस्मिंश्चिद्बिले गोपितवान् तदानीमिन्द्रस्तद्बिलं स्वसैन्येन समावृत्य तस्माद्बिलाद्गा निःसारयामास तदिदमुपाख्यानम् इन्द्रो बलस्य बिलमपोर्णोदित्यादिब्राह्मणेषु मन्त्रान्तरेषु च प्रसिद्धम् तदेतद्धृदि निधायायं मन्त्रः प्रवर्त्तते — हे अद्रिवो वज्रयुक्तेन्द्र त्वं गोमतो गोभिर्युक्तस्य वलस्यासुरस्य संबन्धि बिलं अपावः स्वसैन्यमुखेनापावृतवानसि तदानीं तुज्यमानासो वलेनाहिंस्यमाना देवा अबिभ्युषस्त्वदीयरक्षया बलादभीताः — सन्तस्त्वामाविषुः प्राप्तवन्तः — अस्मिन्मन्त्रे बलेन साकं युद्धमिन्द्रस्य वज्रयुक्तत्वं च निरूपितम् — ॥

मायाभिरिन्द्र मायिनं त्वं शुष्णमवातिरः विदुष्टे तस्य मेधिरास्तेषां श्रवांस्युत्तिर ऋ० अ० १ अनु० २ सू० ११ मं० ७ ॥

अस्यार्थः हे इन्द्र त्वं मायिनं कपटिनं शुष्णं भूतानां शोषणहेतुमेतन्नामकमसुरं मायाभिस्त्वं निकृतैः कपटविशेषैः यद्वा तद्वधोपायगोचरप्रज्ञाभिरवातिरः हिंसितवानसि एतच्च यास्केनोक्तम् इन्द्रः शुष्णं जघानेति शुष्णं पिप्रुमित्यादिमन्त्रे चायमर्थो विस्पष्टः मेधिरा मेधावन्तोः तस्यानारः तस्यैतादृशस्यैनमहिमानं विदुर्जानन्ति तेषां जानतामवांस्यन्नानि वर्द्धय केतः केतुरित्यादिषे काद्दशसु प्रज्ञानाम सुमायावयुनमितिपठितम् अवः शब्दं यास्को निर्बक्ति अव इत्यन्ननामश्रूयतइति अत्रेन्द्रेण शुष्णाहिंसनमितिवर्णितम् - ॥

**अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् - अस्ययज्ञस्य सुक्रतुम् ऋ० अ० १ अनु० ३ सू० ११ मं० १ ॥**

अग्नेर्दूतत्वमैतरेयब्राह्मणे समाम्नायते अग्निर्देवानां दूत आसीदुशनाकाव्योऽसुराणामिति वृणीमहे संभजामः होतारं देवानामाह्वातारम् विश्ववेदसं सर्वधनोपेतम् सुक्रतुं शोभनकर्माणम् शोभनप्रज्ञं वा मघमित्यादिष्वष्टाविंशति धननामसु वेद इति पठितम् - अत्राग्नेर्देवानां दूतत्वमाह्वातृत्वं चोक्तम् - ॥

**अग्निमग्निं हवीमभिः सदाहवन्त विश्पतिम् - हव्यवाहं पुरुप्रियम् ऋ० सू० ११ अनु० ३ अ० १ मं० २ ॥**

अस्यार्थः हवीमभिराह्वानकारकैर्मन्त्रैर्हवन्तः अनुष्ठातार आह्वयन्ति विश्पतिं धनपतिम् हव्यवाहं यजमानसमर्पितस्य हविषो देवान्प्रति वोढारम् ॥

**स नः पावक दीदिवोऽग्ने देवाँ इहावह - उपयज्ञं हविश्च नः ऋ० अ० १ अनु० ३ सू० १२ मं० १० ॥**

हे दीदिवः देदीप्यमान पावक इह यत्ते यज्ञं यज्ञस्यं हविः उपदेवसमीपे प्रापय - ॥

**अग्ने शुक्रेण शोचिषा विश्वाभिर्देवहूतिभिः इमं स्तोमं जुषस्व नः ऋ० अ० १ अनु० ३ सू० १२ मं० १२ ॥**

शुक्रेण श्वेतवर्णेन दीप्त्या देवहूतिभिः त्वत्कृत सर्वदेवताह्वानसाधनस्तोत्रैर्युक्तस्त्वम् स्तोमं स्तोत्रविशेषम् - ॥

**मधुमन्तं तनूनपाद्यज्ञं देवेषु नः कवे - अद्या कृणुहि वीतये ऋ०**

अ॰१ अनु॰३ सू॰१३ ऋ॰२ ॥

अस्यार्थः कवे मेधाविन् अद्यास्मिन्दिने मधुमन्तं रसवन्तं यज्ञं वीतये हविर्भक्षणाय देवेषु कृणुहि कुरु प्रापयेत्यर्थः अद्याकृणुहि इत्यत्र संहितायां अन्येषामपि दृश्यते पा॰ ६।३।१३७ इति दीर्घः- ॥

नराशंसमिह प्रियमस्मिन्यज्ञउपह्वये- मधुजिह्वं हविष्कृतम्-

ऋ॰ अ॰१ अनु॰३ सू॰१३ मं॰३ ॥

अस्यार्थः इह देवयजनदेशे अस्मिन्वर्त्तमाने यज्ञे नराशंसमेतन्नामकमग्निं उपह्वये आह्वयामि कीदृशमग्निं प्रियं देवानां प्रीतिहेतुम्- पु॰ की॰ मधुजिह्वं मधुरभाषिजिह्वोपेतम् माधुर्य्यरसास्वादकजिह्वोपेतं वा हविष्कृतम् हविषो निष्पादकम् नृनयइत्यस्माद्वक्तः नरइति शंसन्त्यस्मिन्निति शंसः हलश्चेति घञ् नराणांशंसइति समासे वनस्पत्यादिषु पाठान्नराशब्दस्य दीर्घः- अस्मिन् अग्ने र्जिह्वोपेतत्वमुच्यते- ॥

अग्ने सुखतमे रथे देवां ईळित आवह- असि होता मनुर्हितः ऋ॰ अ॰१ सू॰१३ ऋ॰४ अनु॰३ ॥

अस्यार्थः इदृशाब्दाभिधेय हे अग्ने ईळितोस्माभिः स्तुतः सन्सुखतमे सुखहेतौ कस्मिंश्चिद्रथे देवान्स्थापयित्वा कर्मभूमावावह इदृशाब्दाभिधेयत्वमत्र सूचयितुं ईळित इति विशेषणम् मनुनामन्त्रेण मनुष्येण वा यजमानादि रूपेणाहितो वस्थापितस्त्वम् होता देवानामाह्वातासि सुखतमे सुखमस्मिन्नस्तीति मतुप् न स्यगुणवचनेभ्योमतुपोलुग्वक्तव्य इति लुक् अतिशयेन सुखः सुखतमः मनुर्हितः सुपांसुलुगित्यनेन स्वादेशात्स्य हत्वं सुलुगभावपक्षान्दसः ॥

नक्तोषासा सुपेशसास्मिन्यज्ञउपह्वये- इदन्नो वर्हिरासदे- ऋ॰ अ॰१ अनु॰३ सू॰१३ मं॰७ ॥

अस्यार्थः नक्तोषासा नक्ताभिमानिवह्निमूर्त्तिद्वयेआसदेआसत्तुम् की॰ वह्नि॰ सुपेशसा सुरूपे वर्हिर्दर्भम् ॥

नासुजिह्वाउपह्वये होतारादैव्याकवी- यज्ञंनोयक्षतामिमम्

ऋ· सू १३ मं·८ अ·१ अनु·३ यज्ञनाम् अनुतिष्ठनाम् अ ग्निहयस्याह्वानम इडलासरस्वती महीतिस्रोदेवीर्मयोभुवः वर्हिः सीदन्त्वस्रिधः ऋ· सू १३ मं·९ ॥

इळेत्यादयस्तिस्रोवह्निमूर्तयः सीदन्तुप्राप्नुवन्तु अस्त्रिधः शोषेणक्षयेणवा रहिताः स्त्रिधद्भिः सार्यांशोषणेवा सम्पदादिभ्यः क्विप्-अत्राग्नित्रयाह्वानम्-

अवसृजावनस्पतेदेवदेवेभ्योहविः-प्रदातुरस्तु चेतनम् ऋ· सू १३ मं ११ ॥

हेवनस्पते एतन्नामकाग्नेदेवहविर्भुग्भ्योदेवेभ्योस्मदीयंहविः अवसृज समर्पयेत्यर्थः प्रदातुर्यजमानस्यपरलोकविषयंचेतनंज्ञानंतत्प्रसादादस्तु-

स्वाहायज्ञंकृणोतनेन्द्रायपज्वनोगृहे-तत्रदेवांउपह्वये ऋ· सू १३ मं १२ ॥

हेस्वाहानामकाग्नेत्वयासम्पादितंयज्ञंइन्द्रायेन्द्रतृप्त्यर्थंयज्वनोयजमानस्यगृहेकृणोतन ऋत्विजः कुरुत· तत्रयज्ञेदेवान्उपह्वयेइति त्रिषेते ष्वग्नेर्देवाह्वानत्वमेवोक्तम्-

इन्द्रवायूबृहस्पतिंमित्राग्निंपूषणंभगम्-आदित्यान्मारुतंगणम् ऋ· अ·१ अनु·२ सू १४ मं·३ ॥

हेअग्नेयक्षीतिपदद्वयमनुवर्ततेत्र-अत्रमन्त्रेइन्द्रादिनवदेवताह्वानापेक्षा स्तुतिः ॥

प्रवोभ्रियन्तइन्दवोमत्सरामादयिष्णवः द्रप्सामध्वश्चमूषदः ऋ·सू १४ मं· ४ ॥

हेइन्द्रादिदेवावोयुष्मदर्थमिन्दवः सोमाः भ्रियन्तेप्रकर्षेण सम्पाद्यन्ते कीदृशाः मत्सरास्तृप्तिकारकाः मत्सरः सोमीमन्दतेस्तृप्तिकर्मणइतियास्कः मादयिष्णवः हर्षहेतवः द्रप्साविन्दुरूपाः मध्वः मधुराः चमूषदः चमूषु चमसादिपात्रेष्ववस्थिताः अत्रेन्द्रादिदेवानांप्रार्थना-

घृतपृष्ठामनोयुजोयेत्वावहन्तिवह्नयः आदेवान्त्सोमपीतये ऋ· सू १४ मं·६ ॥

हे अग्ने ये अश्वाः युक्ताः त्वं न दीप्यमानस्य मनः सङ्कल्पमात्रेण रथे युज्यमाना स्त्वां रथेन वहन्ति की० वह्नयो वोढारः तैरश्वैः सोमपीतये देवानां वह देवि शेषः अत्राग्नेरश्वानां निरूपणम् - ॥

ये यजत्रा य ईड्यास्ते ते पिबन्तु जिह्वया - मधोरग्ने वषट्कृति ऋ० सू० १४ मं० ८ ॥

ये देवा यजत्रा यष्टव्यास्तथा ईड्याः स्तुत्यास्ते सर्वे पिबन्तु वषट्कृति वषट्कारकाले वषट्कारयुक्ते यागे वा हे अग्ने ते जिह्वया मधोर्मधुरस्य सोमस्य भागं पिबन्तु - अत्राग्नेर्जिह्वया देवानां सोमपानस्य निरूपणम् - ॥

मुण्डकोपनिषदि खण्ड० २ काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा स्फुलिङ्गिनी विश्वरूपी च देवी लेलायमाना इति सप्त जिह्वा इति० विश्वेभिः सोम्यं मध्वग्न इन्द्रेण वायुना - पिबा मित्रस्य धामभिः ऋ० सू० १४ मं० १० ॥

विश्वेभिः सर्वैः ऋषभगादिभिर्देवैः धामभिस्तेजोभिर्मूर्तिविशेषरूपैश्च सह सोम्यं सोमसम्बन्धि मधु मधुरं भागं पिब - अत्र बहूनां देवानां सेन्द्राणां सोमपानाय प्रार्थना - ॥

युक्ष्वा ह्यरुषी रथे हरितो देव रोहितः ताभिर्देवां इहावह ऋ० सू० १४ ऋ० १२ ॥

हे देवाग्ने रोहितो रोहिताख्या अभिधेयास्त्वदीया वडवा रथे युक्ष्व योजय हि पादपूरणार्थः की० अरुषीर्गतिमतीः पु० की० हरितः हर्तुं रथारूढान्देशान्तरं समर्थाः ताभिर्वडवाभिरिहास्मिन्कर्मणि देवानां वह - अत्राग्नेः रथाश्ववर्णनम् - रोहिताश्वेति तन्नामनिर्वचनमपि - ॥

इमा धाना घृतस्नुवो हरी इहोपवक्षतः इन्द्रं सुखतमे रथे ऋ० अ० १ अनु० ४ सू० १६ ऋ० २ ॥

हरी इन्द्राश्वौ अत्र श्रुत्यन्तरम् हर्योः स्थातेति हरिभ्यां त्वेन्द्रो देवतागमयत्विति च निघण्टुरपि हरी इन्द्रस्य लोहितो अग्नेरिति धाना भ्रष्टयवतण्डुलाः घृतस्नुवः क्षरितघृता इमा उद्दिश्य इह कर्मणि सुखतमे रथे

दयानंद मतमर्दनम् ॥

इन्द्रमुपस्थाप्य उपवदतः वेदिसमीपे वहतम् अस्मिन् यज्ञे इन्द्रमस्माकं समीपं प्रापयतमित्यग्नौ प्रार्थना प्रोक्ता- ॥

उप नः सुतमागहि हरिभिरिन्द्र केशिभिः सुते हि त्वा हवामहे
ऋ० अ० १ अनु० ४ सू० १६ मं० ४ ॥

केशिभिः केशरयुक्तैः सुते सोमे निमित्तभूते सति आगहि आगच्छ अत्रेन्द्राश्वयोः केशरयुक्तत्वं वर्णितम्- ॥

सेमं नः स्तोममागह्युपेदं सवनं सुतम् गौरो न तृषितः पिब ऋ०
अनु० ४ सू० १६ ऋ० ५ ॥

हे इन्द्र स त्वं गौरो न गौरमृग इव तृषितः सन्निमं पिब- अत्रेन्द्रस्य सोमपानाय प्रार्थनम्-

ये नाकस्याधि रोचने दिवि देवास आसते- मरुद्भिरग्न आगहि ऋ०
सू० १९ ऋ० ६ ॥

नाकस्य दुःखरहितस्य सूर्यस्य अधि उपरि दिवि द्युलोके रोचने दीप्यमाने इति-

य ईङ्खयन्ति पर्वतान्तिरः समुद्रमर्णवम्- मरुद्भिरग्न आगहि ऋ०
सू० १९ ऋ० ७ ॥

ये मरुतः पर्वतान्मेघान् ईङ्खयन्ति नयाः अर्णवं उदकयुतं समुद्रन्तिरः कुर्वन्ति निश्चलस्य जलस्य तरङ्गाद्युत्पन्नपे चालनन्तिरस्कारः अत्र मरुद्भिर्देवैः सहेन्द्रस्याह्वानम्-

य इन्द्राय वचोयुजा ततक्षुर्मनसा हरी- शमीभिर्यज्ञमाशत ऋ०
अ० २ सू० २१ मं० २ ॥

ये देवा ऋभुनामानः इन्द्राय इन्द्रप्रीतये वचोयुजा तावुभौ विनावाङ्मात्रेण रथे युज्यमानौ हरी मनसा ततक्षुः सम्पादितवन्तः ऋभूणां सत्यसङ्कल्पत्वात्सङ्कल्पमात्रेणेन्द्रस्याश्वौ संपन्नावित्यर्थः ये ऋभवः शमीभिश्चमसादिनिष्पादनरूपैः कर्मभिर्यज्ञमाशत व्याप्नवन्तः अपः अस इत्यादिषड्विंशतिकर्मनामसु शमी शिमीति पठितम् अत्रर्भुभिरिन्द्राश्वनिर्माणं प्रोक्तम्- ॥

तक्षन्नासत्याभ्यां परिज्मानं सुखं रथम्- तक्षन्धेनुं सबर्दुघाम्-
ऋ० अ० २ सू० २१ मं० ३ ॥

नासत्याभ्यामश्विभ्यां प्रीत्यर्थं रथं ततक्षुः किंविशिष्टमतक्षन् तक्षणेन सम्पादितवन्तः कीं

परिज्मानंपरितोगन्तारम् सुखंउपर्युपदेशनेसुखकरम् किञ्च कांश्चिद्धांतन्तन् धान्तनामनेकार्थत्वान्नदातिरत्रसम्पादनवाची की॰ धे॰ सवर्दुघां सवरःक्षीरस्यदोग्ध्री- अत्रेन्द्ररथस्य नासत्याभ्यां तक्षणेन निर्माणमुक्तम् ॥

**युवाना पितरा पुनः सत्यमन्त्रा ऋजूयवः - ऋभवो विष्ट्यक्रत -**

**ऋ॰ अ॰ २ सू॰ २१ ऋ॰ ४ ॥**

ऋभवो देवाः स्वकीयौ मातापितरौ सर्वं वृद्धावपि पुनर्युवानानरणे अकृत कृतवन्तः सत्यमन्त्रा अवितथमन्त्रसामर्थ्योपेताः पुरश्चरणाद्यनुष्ठानेन सिद्धमन्त्रत्वाद्यद्यत्फलमुद्दिश्य मन्त्राः प्रयुज्यन्ते तत्फलं तथैव सम्पद्यते की॰ ऋजूयवः छलरहिताः अत एवैषामनुष्ठिता मन्त्राः सिद्धानि की॰ विष्टी व्याप्तियुक्ताः सर्वेषु कार्येषु तदीयमन्त्रसामर्थ्यस्याप्रतिघातो व्याप्तिरुच्यते ऋभुशब्दं यास्क एवं निर्वक्ति ऋभवउरुभान्तीतिवर्त्तेन उरुभान्तीति अत्र ऋभुभिर्हि द्यौः पित्रोर्युवकरणं वर्णितम्-

**उत त्यं चमसं नवं त्वष्टुर्देवस्य निष्कृतम्- अकर्त्त चतुरः पुनः ऋ॰**

**अ॰ २ सू॰ २१ ऋ॰ ६ ॥**

त्वष्टुर्देवस्य तक्षणव्यापारः नवं नूतनं चमसं सोमधारणाय मेकं पात्रविशेषं निष्कृतं निःशेषेण सम्पादितमकरोदिति शेषः तक्षणव्यापारकुशलस्त्वष्टुः शिष्या ऋभवस्तेन निर्मितं चमसं पुनरपि चतुर्धा विभक्तांश्चमसान्कृतवन्तः अयमर्थो मन्त्रान्तरेऽपि विस्पष्टः एकं चमसं चतुरः कृणोतनेति अत्र त्वष्टुः कर्तृकं चमसनिर्माणमुक्तम्- ॥

**अधारयन्त वह्नयोऽभजन्त सुकृत्यया- भागं देवेषु यज्ञियम्**

**ऋ॰ अ॰ २ सू॰ २१ मं॰ ७ ॥**

चमसादिसाधननिष्पादनेन यज्ञस्य वोढार इति तथा च मन्त्रान्तरमाम्नायते मर्त्तासः सन्तोऽमृतत्वमानशुरिति अयमर्थः सौधन्वना यज्ञियभागमानशेति मन्त्रान्तरे- ब्राह्मणेऽपि ऋभवो देवेषु तपसा सोमपीथमभ्यजयन्निति पाध्यानं विस्पष्ट-

**याः सुरथा रथीतमोभा देवा दिविस्पृशा- अश्विना ता हवामहे -**

**ऋ॰ अ॰ २ सू॰ २२ मं॰ २ ॥**

रथीतमा अतिशयेन रथिनौ दिविस्पृशा द्युलोकनिवासिनौ - ॥

**यावांकशः। मधुमत्यश्विना सूनृतावती- तया यज्ञं मिमिक्षतम्**
**ऋ॰ अ॰ २ सू॰ २२ मं॰ ३ ॥**

कशाअश्वताडनी मिमिक्षतं यज्ञं सोमरसेन सेक्तुमिच्छन्तौ कशयाऽश्वं दृढं ताडयित्वागत्य सोमरसाहुतिं निष्पादयितुमुद्युक्तौ भवतमित्यर्थः की॰ मधुमती उदकवती निघण्टौ मधु उदकनामस्वश्वस्य शीघ्रगत्याय: स्वेदस्तेन क्लिन्ना पु-की॰ सूनृतावती प्रियसत्यवाग्युक्ता तीव्रेण कशाघातेन यो ध्वनिरुत्पद्यते ताडनवेलाया मश्वाह्वानस्य चाक्रोशः क्रियते तदुभयं शीघ्रमागमनहेतुत्वेन यजमानस्य प्रियम्- ॥

**नहि वामस्ति दूरके यत्रा रथेन गच्छथः अश्विना सोमिनो गृहम्**
**ऋ॰ अ॰ २ सू॰ २२ मं॰ ४ ॥**

यत्राइत्यत्र संहितायामिति दीर्घः अत्राश्विनोः रथहय जलक्लिन्नकशानां प्रणयनम्- ॥

**हिरण्यपाणिमूतये सवितारमुपह्वये- सचेत्तादेवता पदम्-**
**ऋ॰ अ॰ २ सू॰ २२ ऋ॰ ५ ॥**

ऊतयेरक्षणार्थं सवितारं देवं उपह्वये आह्वयामि सचदेवः सविता एतन्मन्त्र प्रतिपाद्य देवता भूत्वा पदं यजमानप्राप्यं स्थानं चेत्ता ज्ञापयिता भवति की॰ सवितारं हिरण्यपाणिं यजमानाय दातुं हस्ते सुवर्णं धारिणम् यद्वा देवकर्त्तृके यागे सविता स्वयमृत्विग्भूत्वा ब्रह्मत्वेनावस्थितस्तस्मै कस्याश्चिदिष्टावध्वर्यवस्तस्मै सवित्रे ब्रह्मणे प्राशित्रनामकं पुरोडाशभागं दत्तवन्तः तच्च प्राशित्रं सवित्रा हस्ते गृहीतं सत्तन्दीयं पाणिं चिच्छेद अतः प्राशित्रदातारोऽध्वर्य्यवः सुवर्णमयं पाणिं निर्माय प्रदत्तवन्तः सोयमर्थः कौषीतकि ब्राह्मणे समाम्नातः सवित्रे प्राशित्रं प्रतिजह्रुस्तत्तस्य पाणी प्रचिच्छेद तस्मै हिरण्मयौ दधुस्तस्माद्धिरण्यपाणिरिति हिरण्यशब्दं पाणि शब्दं च यास्क एवं निर्वक्ति हिरण्यं कस्माद्ध्रियत आयम्यमानमिति वा ह्रियते जनाज्जनमिति वा हितरमणं भवतीति वा हृदयरमणं भवतीति वा हर्य्यतेर्वा स्यात्प्रेप्साकर्मण इति त था पाणिः पणायतेः पूजा कर्मण इति अत्र सवितुः सुवर्णपाणित्वमुक्तम्-

**अपांनपातमवसे सवितारमुपस्तुहि- तस्य व्रतान्युश्मसि- ऋ अ·२ सू २२ ऋ·६ ॥**

अवसे अस्मान्त्ववितुम् तस्य व्रतानि कर्माणि उश्मसि कामयामहे की·सवि· जलानांनपालकं सन्तापेन शोषकमित्यर्थः अत्र सूर्यस्य जलपोषकस्याध्वर आह्वान मुक्तम्- ॥

**अग्ने पत्नीरिहावह देवानामुशतीरुप- त्वष्टारं सोमपीतये- ऋ· अ·२ सू २२ मं·९ ॥**

देवानां पत्नीः इन्द्राण्याद्याः उशतीः कामयमानाः- ॥

**इहेन्द्राणीमुपह्वये वरुणानीं स्वस्तये- अग्नायीं सोमपीतये- ऋ· अ·२ सू २२ मं १२ ॥**

इन्द्रवरुणभवेत्यादिना पुंयोगे ङीप् आनुगागमश्च हृषाकृप्यग्नि कुसितेत्यादिना ङीप्- ॥

**मही द्यौः पृथिवी चन इमं यज्ञं मिमिक्षताम्- पिपृतांनो भरीमभिः ऋ· अ·२ सू २२ ऋ १३ ॥**

मही महती द्यौः द्युलोकदेवता पृथिवी भूमिदेवता भरीमभिः पोषणैः स्वकीयसारभूतेन रसेन सेक्तुमिच्छताम् पिपृतां पूरयताम् अत्र मन्त्रद्वये देवपत्नीनामाह्वानमुक्तम्- तापनीयशाखायांसमाम्नायते यक्षगन्धर्वाप्सरोगणसेवितमन्तरिक्षमिति यक्षगन्धर्वादीनामत्र प्रतिपादनम्- ॥

**पुरां भिन्दुर्युवा कविरमितौजा अजायत- इन्द्रो विश्वस्य कर्म्मणो धर्त्ता वज्री पुरुष्टुतः ऋ· अ·१ अनु·३ सू ११ मं·४ ॥**

अस्यार्थः पुरां असुरपुराणां भिन्दुर्भेत्ता युवा वलीपलितादिरहितः कविर्मेधावी अमितौजा बहुबलः विश्वस्य सर्वस्य कर्मणो ज्योतिष्टोमादेर्धर्त्ता पोषकः- वज्री वज्रयुतः पुरुष्टुतः बहुविधतत्तत्कर्मणि स्तुतः एतादृशोयमिन्द्रः अजायत सम्पन्नः- अत्रेन्द्रस्य पुरन्दर पुरुहूत वज्रि नाम्नामर्थनिरूपणं युवत्वकथनं च-

**तुभ्यं वायुमनोजवा विप्राहवन्त ऊतये- सहस्राक्षाधियस्पती ऋ- अ·२ सू २३ ऋ·३ ॥**

दयानन्द मत मर्द्दनम् ॥

विश्वान्देवान्हवामहे मरुतः सोमपीतये- उग्राहि पृश्निमातरः ऋ॰ अ॰ २ मं॰ १९
श्निमातरः भूमेः पुत्राः अत्र मरुत्संज्ञकदेवानामावाहनं पृश्निपुत्रत्वकथनेप-

शिप्रिन्वाजानाम्पते शचीवस्तव दंसना- आतून इन्द्र शंसय गो
ष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ऋ॰ अ॰ २ अनु॰ ६ सू॰ २९ ऋ॰ २

शचीवः शची शुक्रेन्द्र शिप्रिन् शोभमनासिक तुवीमघ बहुधनेन्द्र इनिदं सनाक
मविशेषो ऽनुग्रहरूपः सर्वदानववर्त्तते अत्र शचीपतित्वात्सीर मघवशब्दार्थकः-

निषापयमिथूदृशा स्त्वामबुध्यमाने - आतूनइत्यादिपूर्वव
त् ऋ॰ अ॰ २ सू॰ २९ ऋ॰ ३ ॥

अस्यार्थः मिथूदृशापरस्परं सङ्गतत्वेन दृश्यमाने यमदूत्यौ निषापय नितरां
स्वप्नेकुरु तेचास्मान्मा ऽरयितु मबुध्यमाने सत्यौ सततं निद्रां प्राप्नुताम्- अत्र
शुनःशेफकर्त्तृकायमदूत्योः स्वापनायप्रार्थना- ॥

त्वमग्ने प्रथमो अङ्गिरस्तमः ऋ॰ अ॰ २ सू॰ ३१ मं॰ २ ॥

इतिमन्त्रेऽग्नेरङ्गिरोनामकर्षिजनकत्वमुक्तम् तत्र ब्राह्मणमप्येवं श्रीमाधवा
चार्य्यपादाःप्रमाणयन्तिये अङ्गारास्तेऽङ्गिरसोभवन्निति- ॥

त्वमग्ने मनवे द्यामवाशयः ऋ॰ अ॰ २ सू॰ ३१ मं॰ ४ ॥

इत्यादिमन्त्रे हेअग्ने त्वं मनोरनुग्रहाय द्यां द्युलोकं अवाशयः शब्दितवानसि
पुण्यकर्मभिः साध्यो द्युलोक इति प्रकटितवानसि इत्ययमर्थो निरूपितः-

अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन- स्कन्धांसीव
कुलिशेनाविवृक्णाहिः शयतउपपृक्पृथिव्याः ऋ॰ अ॰ २
सू॰ ३२ मं॰ ५ ॥

अस्यार्थः वृत्रतरं लोकानामावरकं अन्धकाररूपम् व्यंसं विगतांसं छिन्नबा
हुर्यथाभवतितथाहनत् कुलिशेनकुठारेण- अहिर्वृत्रः उपपृक् सामीप्येन सं
पृक्तः शेते छिन्नकाष्ठवद्भूमौ पतनीत्यर्थः वज्रेणवज्रनिपातादिनेनविवृक्ण
छिन्नानि- ॥

अपादहस्तो अपृतन्यदिन्द्रमास्यवज्रमधिसानौ जघानेत्या
दि ऋ॰ अ॰ २ सू॰ ३२ ऋ॰ ७ ॥

सानौ पर्वतस्य सानुसदृशे प्रौढस्कन्धे - ॥

इन्द्रस्य नु कं वीर्य्याणि प्रवोचमित्यारभ्य ऋ॰ अ॰ २ सू॰ ३२
पञ्चदशभिर्ऋग्भिरिन्द्रस्य वृत्रेण साकं युद्धस्य वर्णनम् इन्द्रो यातो वसितस्य
राजेत्यन्तं पञ्चदशर्च्चं सूक्तम् - एवं चाभिप्रवः पञ्चाशद्भिर्ऋग्भिः पञ्चदशर्चे
न सूक्तेन चेन्द्रादीनां देवानां हस्तनासिकाहनुकर्णजिह्वाद्यङ्गानां र
थानां हयानां शस्त्राणां च पुनः पुनर्निरूपणस्याभ्युपगमात् युद्धादिरथ
चमसादितक्षणाद्यवगमाच्च वक्तृत्वावगतेश्च तत्पत्नीनामुपादानाच्च तत्पितृ
पुत्राणां ग्रहणेन चावाहनभक्षणपानादिप्रतिपादनेन च स्पष्टमग्न्यादिदेवा
नां वेदकर्म्मकाण्डभागेऽपास्यताया उपलभ्यमानत्वात्कथमीश्वरस्यैवोपास्यत्वं
नाग्न्यादीनां कथं वानेषामचेतनत्वं तेनोच्यत इति हे विद्वांसो भवद्भिरेव सदेवा
नां प्रियः प्रष्टव्य इति - ॥४

न च यदा ते हर्य्यता हरी वावृधाते दिवे दिवे - आदित्ते विश्वा भुवनानि येमिरे इ
ति मन्त्रव्याख्यावसरे ऋग्वेदादिभाष्यभूमिकायाः पञ्चमेऽङ्के दयानन्देन हरी
इत्यस्य आकर्षणप्रकाशनहरणशीलौ बलपराक्रमगुणावश्वौ किरणौ वेति
विवरणस्य वक्ष्यमाणत्वात्कथं पूर्वोक्तस्तु हरिपदेन प्रसिद्धाश्वयोरेव ग्रहणं भव
द्भिः प्रतिपाद्यते तत्रैवाङ्के स्मिन्नेव मन्त्रे परिरथशब्दस्य रमणादिगुणवाचितया
स्तेन निरूपयिष्यमाणत्वात्कथं प्रसिद्धरथशक्तिकत्वमिति प्रोच्यत इति वाच्यम्-
बलपराक्रमौ विहायाश्वादिनिवदता निरुक्तकारेण सह विरोधात् युक्त्वा
हरी रथे इत्यादि पूर्वोक्तमन्त्रे इमा धाना घृतस्नुवो हरी इहोपवक्षत इति
पूर्वोक्तमन्त्रेषु हर्य्योः स्थाता इति श्रुत्यन्तरे च उप नः सुतमा गहि हरिभिरिन्द्र
केशिभिरिति पूर्वं प्रकथितमन्त्रे च रथे अश्वौ योजयित्वा गच्छ इन्द्रं स्थापयित्वा
समानय केशारयुक्तैर्हरिभिरागच्छेत्याद्याकारकतात्पर्य्यस्य स्पष्टमुपलभ्य
मानत्वाच्च यदिन्द्राय मनोयुजा तत्तु मनसा हरीति तत्सत्या सत्याभ्यां परिज्म
ने रथं रथ्यमिति यावाङ्कः शाम धुमत्पश्चिना सत्ता तावतीति नहि कामस्ति दूरके
यत्रा न थे न गच्छथ इति पूर्वोक्तमन्त्रवर्णैः सह विरोधाच्च -
शाम्बदिन्द्रः पोस्मुष्यद्भिर्जगायनानदद्भिः शाश्वसद्भिर्धनानि -

सनोहिरण्यरथंदंसनावान्त्सनः सनितासनयेसनोदात् ऋ·
अ·२ सू·२९ ऋ·१६ ॥

अस्यार्थः इन्द्रः शम्बरस्सर्वदाधनानिवैरिसम्बन्धीनिजिगायजितवान् अर्थे
रितिशेषः की· योमुष्यद्भिः घासभक्षणगमनस्वरभादिनमोऽपशब्दं कुर्वद्भिः
शाम्बसद्भिः पुनः पुनर्भृशं वाम्बसद्भिः दंसनावान्कर्मवान् सनितादातास
इन्द्रोनः सनयेसम्भजनार्थं सुवर्णनिर्मितंरथमदात् सनइतित्रिरुक्तिरादरार्था-

युक्ष्वाहिकेशिनाहरीवृषणाकक्ष्यप्रा- अथानइन्द्रसोमपागि
रामुपश्रुतिंचर- ऋ· अ·२ सू १० मं·३ ॥

अस्यार्थः हेसोमपाः इन्द्र हरीत्वदीयाश्वौ युक्ष्वाहि सर्वथासंयोजय अथा
नन्तरंनोस्मदीयानांगिरांउपश्रुतिं समीपेश्रवणमुद्दिश्यचरनस्मदेशंगच्छ
की· हरीकेशिनास्कन्धप्रदेशेलम्बमानकेशयुक्तौ पु· की· वृषणासेचनस
मर्थौयुवानौ- पु· कक्ष्यप्राअश्वस्योदरबन्धनरज्जुः कक्षातत्रभवः कक्ष्यस्त
स्यसम्पूर्णौपुष्टाङ्गावित्यर्थः कक्ष्यप्रा प्रापूरणे आतोनुपसर्गेकइति कः युक्ष्वा
हि युक्ष्वेत्यस्याकारः संहितायाम्- ॥

ऋ·सू ३· अ·२ मं १९ न्यघ्नस्यमूर्द्धनिचक्रंरथस्ययेम
थुः- परिद्यामन्यदीयते-

अस्यार्थः अघ्नस्यहन्तुमशक्यस्यदृढस्यपर्वतस्यमूर्द्धनिउपरिनियेमथुः
नियमितवन्तौ अन्यच्चक्रंद्युलोकस्यपरितईयतेगच्छति- ॥

आमन्द्रैरिन्द्रहरिभिर्याहिमयूररोमभिरितिसुय- अ २०
मं ५३ स्पष्टम्

समानयोजनोहिवांरथोदस्रावमर्त्यः - समुद्रेअश्विनेयते
ऋ· अ·२ सू ३० मं १८ ॥

अस्यार्थः समुद्रेन्तरिक्षेईयतेगच्छति- इतिमन्त्रैः प्रसिद्धाश्वरथवाचक
योर्हरिशब्दरथशब्दयोर्बलपराक्रमरमणात्मकाप्रसिद्धार्थावाचकत्वस्याश्रया
सेनऊगित्युपलभ्यमानत्वाच्च कथमन्यथाबलपराक्रमयोः पृथक्पृथगेत्योश
ब्दकर्तृत्वमतिशायितद्द्वेषारवोद्धारयितृत्वंपौनःपुन्येनस्वसतंकेशधारित्वम

सूरसदृशरोमवत्त्वं मन्दध्वनिमत्त्वं सेचनसमर्थत्वं उदरबन्धनरज्जुमूर्त्तिसम
र्थपुच्छाङ्कत्वं चकशाताडनविषयत्वं मनोयुजत्वं च सङ्गच्छते इन्द्रस्य तयोरु
पर्य्यारोहणं चोपपद्यते कथं वा रथस्य योजनपरिमाणवत्त्वमन्तरिक्षाधिकर
णाकगमनकर्तृत्वं च सम्भाव्यते तस्माद्दयानन्दकृतोर्थो हरिरथशब्दार्थो मूर्ख
जनरञ्जक एवेति सुधीभिर्हेय इति एवं चेयता प्रबन्धेनाग्निमील इत्यादिम
न्त्रेष्वग्न्यादिदेवानामुपास्यत्वं प्रतिपादितं नेश्वरस्येति सिद्धान्तितम् तत्त्वे चेश्व
रे नेकत्वसशरीरत्वाशनपानादिमत्त्वगमनागमनवत्त्वादीनामङ्गीकारेणेश्वरः
देवादिदेहधारणं न करोतीति तदुक्तसिद्धान्तो विरुद्ध्येतेति अत एव भगव
ता पाणिनिनापि सूत्रितम् इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयव
नमातुलाचार्य्याणामानुक् इति इन्द्रादीनां च सर्वमातुलाचार्य्ययोश्च पुंयो
ग एवेष्यत इति भाष्यं च पुंयोगादाख्यायामिति सूत्रे सूर्य्याद्देवतायां चाप्वा
च्य इति वार्त्तिकं देवताद्वन्द्वे चेति ईदग्नेः सोमवरुणयोरिति इद्वृद्धाविति विष्णौ
नेति पाणिनीयसूत्राणि चेन्द्रादीनां देवतावाचकत्व एव सङ्गच्छन्ते कथमन्यथे
श्वरे ऽशरीरे ऽचेतनेऽग्न्यादौ च पुंयोगो द्वन्द्वश्च सम्भाव्येतेति देवताशब्दस्य विद्
द्वाचकत्वाङ्गीकारे तु विद्वन्मनुजामादानकदेवताभेदविषयकतात्पर्य्यग्राहि
काभिर्यावतीर्वै देवता इत्यादिभिः सर्वोक्तश्रुतिभिर्विरोधो दुःपरिहरः-
मध्वादिविद्याभिधायिकाभिश्च श्रुतिभिर्विरोधोप्यनिवार्य्यः ताश्च श्रुतयः
ऋग्वेदादिभाष्यभूमिकात्तृतीयाङ्कस्य मन्त्रमयी देवतेति तदुक्तिखण्डनउ
दाहरिष्यन्ते किञ्च विदुषां तन्मनुजानां सम्प्रत्यविद्यमानत्वेन यज्ञेन दाह्
नसोमपानादीनां तेभ्यो धनादिप्रार्थनायाश्चानुपपन्नत्वेन वेदोक्तकर्मणामश
क्यं करणत्वेन वेदस्यैव नैरर्थक्यमापद्येत अनेकप्रतिपत्त्यादिसामर्थ्यनिरूपक
प्रमाणाभावेन तेषु तेषु यज्ञेषु तेषां युगपद्गमनागमनासम्भवश्च नहि वै देवा अश्न
न्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्तीत्येवंजातीयकाश्च एवेनमिन्द्रः प्रजयाप
शुभिस्तर्प्पयतीत्येवंजातीयकाश्च श्रुतिर्विरुध्येतेति अन्यदप्युक्तव्यं तदग्रे सङ्क्षे
पेण वक्ष्यत इति- **इति दयानन्दमतमर्द्दने** फणवाड़ानगरवासिप्रभा
करज्ञातीय गोविन्दरामकृते प्रथमः खण्डः १ ॥ + ॥

अग्निःपूर्वेभिर्ऋषिभिरीड्योनूतनैरुत-सदेवाँएहवक्षति ॥
२ माधवाचार्य्याद्युक्तरीत्यैनायंसंक्षिप्तोऽर्थः पूर्वैर्ऋषिभिर्भृग्वादिभिर्नूतनैरस्म
दादिभिःस्तुत्यः सोऽग्निरिहयज्ञे देवान्हविर्भुजआवहत्विति ॥
यत्तुऋषिभिर्मन्त्रद्रष्टृभिःप्राणैस्तर्कैश्चस्तुत्योन्वेषणीयश्चसईश्वरः देवानिन्द्रि
याणिविद्यादिव्यगुणान्दिव्यान्भोगांश्चेहसंसारेजन्मान्यास्मिंश्चआवहतु
प्रापयतुनइतिशेषइति ॥
तन्न अस्याऋचोयज्ञप्रकरणस्थत्वेनेहेतिपदेनयज्ञस्यैवगृहीतमुचितत्वेनसं
साराद्यर्थानांप्रकरणविरुद्धत्वात् नराशंसमिहप्रियमस्मिन्यज्ञउपह्वये-मधुजि
ह्वंहविष्कृतम् ऋ·सू·१३ ऋ·३ इतिमन्त्रेमधुरभाषिजिह्वोपेतनराशंसनाम
काग्निदेवताकायज्ञएवाह्वानेभगवद्देवपुरुषतात्पर्य्यस्येहास्मिन्यज्ञेइतिपदैः
स्पष्टमुपलभ्यमानत्वाच्च किञ्च इहजन्मनीत्यादिरर्थोपिन्यूनत्वात्तत्र[illegible]
ते जन्मान्तरीयेन्द्रियभोगाद्यर्थमपि नत्वार्थनायाउचितत्वात् नइतिशेषस्यास्म
नीत्यनेनान्वयानर्हत्वाच्च अग्निर्यःपूर्वैर्ऋषिभिरीडितव्योवन्दितव्योस्माभिश्चन
वतैःसदेवानिहावहत्वितिव्याख्यानेनयास्केनसहविरुद्धत्वाच्च नह्यत्रर्षिप्रा
णस्तर्कप्राणयोरपिवाचकतायाअङ्गीकारेयास्कःकेवलमस्माभिरितिवदेत् क
थंवातयोश्चेतनत्वेनवन्दनकर्तृत्वाभावादीड्यइतिपदंवन्दितव्यइतिपदेनविवृणु
यात्· कथंवासकृदुच्चरितयोर्देवर्षिशब्दयोर्बह्वर्थबोधकत्वमेकवाक्येसम्भवति
सकृदुच्चरितःशब्दएकमेवार्थंबोधयतीतिसिद्धान्तविरोधात् अरण्योर्निहितोजा
तवेदागर्भइवसुभृतोगर्भिणीभिः-दिवेदिवईड्योजागृवद्भिर्हविष्मद्भिर्मनु
ष्येभिरग्निः एतद्वैतत् कठ· वल्ली·४ मं·८ जागृवद्भिरप्रमत्तैःहविष्मद्भि
राज्यादिमद्भिर्मनुष्यैरीड्यः अरण्योर्निहितोजातवेदाऋग्वेदएवाग्नेरजायते
तिश्रुतेर्जातवेद इत्येतैर्विशेषणैर्महाभूतरूपोग्निरेवस्फुटमवगम्यतेनेश्वरः
अतएवैतद्वैतदित्यनेनाग्नेर्ब्रह्मरूपत्वंप्रतिपाद्यतेतदेवाग्निस्तदादित्यइतिमन्त्रे
यथेतिदिक् नायमात्माप्रवचनेनलभ्योनमेधयानबहुनाश्रुतेन यमेवैषवृणु
तेतेनलभ्यस्तस्यैषआत्माविवृणुतेतनुंस्वामितिकाठकश्रुत्यातन्त्वौपनिष
दंपुरुषंपृच्छामीतिश्रुत्याचब्रह्मणस्तर्काविषयत्वेनप्रतिपादनाच्च उक्तंचै

तत्तु रूपाद्यभावान्नायं प्रत्यक्षस्य गोचरो लिङ्गाद्यभावाच्च नानुमानादीनामाग
ममात्र समधिगम्य एवायमर्थो धर्मवत् तथा च श्रुती नैषा तर्केण मतिरापने
याप्रोक्तान्येनैव सुज्ञानाय प्रेष्ठेति को अद्धा वेद क इह प्रवोचदियं विसृष्टिर्यत
आबभूवेति चैतेन तस्य तर्काविषयत्वं दर्शयतः स्मृतिरपि अचिन्त्याः खलु ये भा
वा न तांस्तर्केण योजयेदिति अव्यक्तोयमचिन्त्योयमविकार्योयमुच्यत इति च य
दपि श्रवणव्यतिरेकेण मननं विदधच्छ्रुतिरेव तर्कमादर्त्तव्यं दर्शयतीत्युच्यते ना
नेन मिषेणाश्रुष्कतर्कस्यात्मलाभः सम्भवति श्रुत्यनुगृहीत एव ह्यत्र तर्कोनुभवा
ङ्गत्वेनाश्रीयते — ॥

अत एव भगवता बादरायणेन सूत्रितम् तर्काप्रतिष्ठानादप्य
न्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः अ॰ २ पा॰
ननु सर्वतर्काप्रतिष्ठायां च लोकव्यवहारोच्छेदप्रसङ्गः अतीतवर्त्तमानाध्वसा
मान्येन ह्यनागतेप्यध्वनि सुखदुःखप्राप्तिपरिहाराय प्रवर्त्तमानो लोको दृश्य
ते श्रुत्यर्थविप्रतिपत्तौ चार्थाभासनिराकरणेन सम्यगर्थनिर्द्धारणं तर्केणैव वा
क्यवृत्तिनिरूपणरूपेण क्रियते मनुरपि चैवमेव मन्यते प्रत्यक्षं चानुमानं च शा
स्त्रं च विविधागमम् त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सतेति आर्षं धर्मोपदे
शं च वेदशास्त्राविरोधिना यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतर इति च ब्रुवता
तदेवं तर्कपरित्यागे निरवद्यस्तर्कः प्रतिपत्तव्यो भवति न हि पूर्वजो मूढ आसीदि
त्यात्मनापि मूढेन भवितव्यमिति कश्चिन्मन्यते तस्मान्नायमेवालङ्कारस्तर्कस्य
यदप्रतिष्ठितत्वं नामेति चेन्न एवमप्यविमोक्षप्रसङ्गः यद्यपि क्वचिद्विषये तर्क
स्य प्रतिष्ठितत्वमुपलक्ष्यते तथापि प्रकृते प्रसज्यत एवाप्रतिष्ठितत्वदोषादनि
र्मोक्षस्तर्कस्य नहीदमतिगम्भीरमीश्वरयाथात्म्यं युक्तिनिबन्धनमागममन्त
रेणोत्प्रेक्षितुमपि शक्यम् प्रत्यक्षाद्यगोचरत्वात् तथा च ऋग्वेदे मन्त्रो कः अ
द्धा वेद क इह प्रवोचत्कुत आयाता कुत इयं विसृष्टिः अर्वाग्देवा अस्य विसर्जने
नाथ को वेद यत आबभूव ६ इयं विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न —
यो अस्याध्यक्षः परमे व्योमन् सो अङ्ग वेद यदि वा न वेद ७ अष्ट॰ ८ अध्या॰ ७ व
२९ म॰ १० अनु॰ ११ सू॰ १२९ मं॰ ६—७ तस्माच्छास्त्रैकसमधिगम्योयमीश्व

रोनतर्कगम्यः तर्काणां परस्परविरोधेनाप्रतिष्ठितत्वात् एवञ्च ब्रह्मणोम
नोवागगोचरत्वेन अतर्क्याप्रमेयत्वात्तर्कविषयीभूतस्य च प्रमेयत्वापातः नित्यवे
नर्षिशब्दस्य तर्काभिधायकत्वकल्पनमयुक्तम् नचयदुक्तमनुष्यावाऋ
षिषूत्क्रामत्सुदेवानब्रुवन्कोनऋषिर्भविष्यतीति तेभ्य एतं तर्कमृषिंप्राय
च्छन्मन्त्रार्थचिन्ताभ्यूहमभ्यूढमितिनिरुक्तात्तर्कविषय ईश्वरः प्रतीयत इ
तिवाच्यम् मन्त्रार्थविचारेतर्कावसरोनेश्वर इतिनिरुक्तार्थात् नहितत्रर्षि
शब्दस्य तर्कपदवाच्यत्वं किन्तु ऋषिप्रतिनिधित्वेन तत्तर्कस्यप्रदानमुक्तम् —
यत्तु सतमन्येनायमेवाग्निरित्यप्येते उत्तरे ज्योतिषी अग्नी उच्येते इतिनि अ० ७
खं ५ई रुक्तात्परमेश्वरो विद्युदादिदिव्यश्चैतावग्नी उत्तरेज्योतिषी अग्रहीतुं
योग्ये इतिवदति — ॥

तन्न परमेश्वरे दक्षिणोत्तरोद्बोधः कल्पनाया अयुक्तत्वेन दिव्यभौमान्यग्नि
मानि देवता प्रतिपादनपरत्वान्निरुक्तस्य स्वापस्नेशब्दप्रयोगे किमित्यवाचकं प्र
युञ्जामहइतिन्यायेनसतिप्रसिद्धार्थेनर्निर्वाह एतादृशक्लिष्टकल्पनाया अ
नुचितत्वाच्च एतेन माधवाचार्यादिप्रणीतार्थेन वेदस्य तत्त्वाशयतां वदतस्त
वैवदन्तइमस्तित्वं नन्दुक्तार्थानभिज्ञत्वात् — ॥

यत्तु सर्वैर्भिर्जगत्कारणस्यैर्नूतनैःकार्यशरीरस्थैर्ऋषिभिः प्राणैः सहमनुष्यै
रीड्यः वन्द्योन्वेषणीयश्चेत्यर्थः भाषार्थेतत्कृते ईश्वरसामर्थ्यं प्रकृतिः परमा
णवश्चते जगत्कारणानि तेषु ये सूक्ष्माः प्राणास्त एव पूर्वेभिरितिपदेनोक्तास्ते
सर्वदानिर्विकारा ब्रह्माण्डधारकाश्च स्थूलजगति शरीरे च ये प्राणास्तेषां नूत
नैरितिपदेनग्रहणम् शरीरेण सहैवतेषामुत्पत्तिवृद्धिक्षयवत्त्वात् तैर्द्विवि
धप्राणैः सहाभ्यासाज्ज्ञानमध्यतएवेश्वरः प्राप्नोतीतिकथयति — ॥

अत्रोच्यते ईश्वरसामर्थ्यरूपाप्रकृतिः पृथिव्यादिचतुष्टयपरमाणवो जग
त्कारणानि ईश्वरादन्यत्रतिष्ठन्तीश्वरेवा आद्ये ईश्वरस्यासामर्थ्यतापत्तिः नि
राधारस्य सामर्थ्यस्यान्यत्रावस्थानासम्भवश्च नहिमनुष्यादिसामर्थ्यमन्या
न्यस्मिन्स्थानेऽवतिष्ठति दृश्यते मनुष्यादिकं स्वाधारं विहायेति तेषामेवस्थू
लजगद्रूपेणपरिणतत्वात्तस्य प्राणानां जगद्धारकत्वकल्पनमप्यनर्थकम्

## दयानन्दमतमर्दनम्-

ईश्वरसामर्थ्यरूपत्वेनतेषामेवस्वधारकत्वस्यकल्पयितुंशक्यत्वात् द्वितीये
येतदाधारस्येश्वरस्यैवतद्धारकत्वेनतदतिरिक्तत्वस्यप्राणानांब्रह्माण्डधार
कत्वकल्पनस्यानुचितत्वम् प्रत्युतप्रकृतिपरमाण्वाधारकाणांप्राणानांब्रह्मा
ण्डत्वेनपरिणतानांप्रकृत्यादीनांधारकत्वमपिवक्तुमशक्यम् आधाराधेय
भावव्यत्यासात् किञ्च प्रकृतिपरमाणूनांजडत्वेनजगत्कारणत्वमपिनयु
ज्यते यतोवाइमानिभूतानिजायन्तेयेनजातानिजीवन्तियत्प्रयन्त्यभिसंविश
न्तितद्विजिज्ञासस्वतद्ब्रह्मेतिश्रुतेर्जन्माद्यस्ययतइतिवैयासिकसूत्राच्चतदै
क्षतबहुस्यामितिश्रुतेरीक्षतेर्नाशब्दमितिबादरायणप्रणीतसूत्राच्चेतनस्यैवा
भिन्ननिमित्तोपादानत्वंजगतइति अपिच प्राणैःसहमनुष्यैरीड्यइत्यपिन
युक्तम् सहार्थयोगेऽप्रधानेतृतीयाविधायकेनसहयुक्तेऽप्रधानइतिपाणि
निसूत्रेणसहविरोधात् नचहिसहार्थःसाहित्यम् तच्च स्वसमभिव्याहृतक्रि
यादिसमकालिकक्रियादिमत्त्वंक्वचित्समानदेशक्रियावत्त्वम् तथाचमनुष्या
णांस्तुत्यन्वेषणरूपक्रियावत्त्वेपिजडानांप्राणानांतत्क्रियावत्त्वासम्भवात् -
एतेनप्राणैःसहाभ्यासादित्यपिप्रत्युक्तम् जडानांप्राणानांमध्यतश्चेतनस्य
कायस्याविकारिणःप्राग्रशक्यत्वाच्च यद्यपिब्रह्मणःसर्वविवर्ताधिष्ठानत्वे
नसर्वत्रतत्सत्तास्फूर्त्याद्युपलभ्यते तथापिप्राणमध्यतएवतत्प्राप्तिर्नान्यस्मा
त्पाषाणादेरित्यस्यायुक्तत्वमेव तस्मान्निर्मूलंनिर्युक्तिकंचेदं दयानन्दस
रस्वतीकृतंव्याख्यानंशिष्टैरनादरणीयम् - ॥
प्राक्तनैर्नवीनैःप्राणैःशिल्पविद्याविद्भिस्तैरग्निरन्वेष्टव्यगुणोस्ति सोऽग्नि
रिहपदार्थविद्यायांकलाकौशलस्यविमानानांयानानांचदिव्यगुणानावह
त्विति आकाङ्क्ष्येतचेत्द्वितीयोर्थस्तुसर्वथाप्रामादिकः ॥
लोहकारादिषुऋषिशब्दप्रवृत्तेरप्रामाणिकत्वात् निरुक्तानुरोधेनेड्योऽप्राप
रपर्यायाध्येषणावाचकत्वेप्यन्वेषणवाचकत्वाभावाच्चदेवशब्दस्यदिव्य
गुणार्थपरत्वमित्यत्रप्रमाणाभावाच्च - ॥

**अग्निनारयिमश्नवत्पोषमेवदिवेदिवे - यशसंवीरवत्तमम् ३**

अत्रमाधवः योयंहोतास्तुत्योग्निस्तेनाग्निनानिमित्तभूतेनयजमानोरयिंध

नमस्सवत् अश्नोत्प्राप्नोति को ० रयिं प्रतिदिनेषु पुष्यमाणान्नयार्थवर्द्धमानमेव न तु कदाचिदपि क्षीयमाणम् पु ० को ० यशसम् दानादिना यशोयुक्तम् पु ० को ० वीरवत्तमम् अतिशायेन पुत्रभृत्यादिवीरपुरुषोपेतम् सन्निहितं अग्निसंप्रतः अस्मयमेवोपस्थितः ४ इति रयिषु ते ग्रमयमित्यादिधननामसु पठितः ॥

अत्र दयानन्दः अत्राप्यग्निशब्दस्येश्वरवाचकतां वदति तद्भ्रान्तिमूलकम् ॥

पूर्वोक्तयुक्तिश्रुतिनिरुक्तविरुद्धत्वात् - मन्द्रं होतारमृत्विजं चित्रभानुं विभावसुम् अग्निमीळे स उ श्रवत् ६ विप्रं होतारमपुरुहूं धूमकेतुं विभावसुम् यज्ञानां केतुमीमहे ऋ ० अष्ट ६ अध्या ३ व ० ३७ मं ० ८ अनु ६ सू ० ४४ मं ० ६ - १०

अनयोर्मन्त्रयोश्चित्रभानुविभावसुधूमकेत्वादिविशेषणविशिष्टत्वेनाग्नेर्देवतायाएवस्तुवैसम्वेद्यत्वाद्वेतितत्र ततद्वितीयोर्थोपिबालमनोरञ्जनसमर्थः सर्वदाविद्वद्भिरुपेक्ष्यएव - ॥

अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि - स इद्देवेषु गच्छति ४ ॥

अस्यार्थः हे अग्ने त्वं यं यज्ञं विश्वतः सर्वासु दिक्षु परिभूः परितो व्याप्तवानसि स इत्स एव यज्ञो देवेषु तर्पयितुं स्वर्गं गच्छति प्राच्यादिचतुर्दिग्गतेष्वाहवनीयमार्जालीयगार्हपत्याग्नीध्रीयस्थानेष्वग्निरस्ति परिशत्त्वेन होत्रीयादिधिष्ण्यव्याप्तिर्विवक्षिता को ० य ० अध्वरम् अग्निना सर्वतः पालितत्वाद्रक्षसादिभिर्हिंसितुमशक्यम् इति ॥

अत्र दयानन्दः हे अनन्तशक्ते परमात्मन्नग्ने त्वं सर्वतो व्याप्तः सन् यं यज्ञं जगद्रूपं वाग्निहोत्राद्यश्वमेधपर्यन्तं यज्ञं तथा भक्तस्तुतिप्रार्थनोपासनाख्यं च त्वमेव पालितवानसि स एव यज्ञः परिशुद्धः सन्निष्ठफलदायको भवति अस्य यज्ञस्यानुष्ठातुर्जनस्य त्वमेव रक्षकोसि सः तस्मात्स मनुष्यः देवेषु विद्यादिदिव्यगुणेषु विद्वत्सु वा प्रवर्त्तमानः सन् इत्सत्येनैव गच्छति परमानन्दं प्राप्नोति न चान्यथेति इत् अत्र निश्चयार्थेति इति व्याचष्टे - ॥

तत्र यज्ञशब्दस्य जगति शक्तेर्निरुक्तकारादिभिरप्रतिपादनात् मखे नामसु पठितत्वाच्च किञ्चात्राये प्रष्टव्याः जगद्रूपयज्ञस्य परिशुद्धिः की

ऽपी कदाचसम्पद्यते तत्परिसमाप्तौ कीदृशं फलं ददाति जगद्रूपयज्ञानु
ष्ठानाचकः नस्यचरक्षकः कोस्ति केते विहंसः कियन्तश्चयेषुजगद्रूप
यज्ञानुष्ठानाप्रवर्त्तमानः सुखेनपरमानन्दंप्राप्नोति गुणागुणिनिप्रवर्त्त
नेविद्यादिदिव्यगुणेषुकथमाधाराधेयभावव्यत्यासेनतद्यज्ञकर्त्तुः
प्रवृत्तिः यंयज्ञंपरिभूरसीतिवाक्यंतंयंयज्ञंपालितवानसीतिव्याख्याय सर्वय
तःपरिहरणःसन्निष्फलदायकोभवतीतिवाक्यंनैकृतोलब्धम् अस्ययज्ञस्या
नुष्ठातुर्जनस्यभवान्रक्षकोस्ति इत्यर्थःकुतःसमागतःसुखेनपरमान
न्दंप्राप्नोतीत्यनेनचकुतःकृपयासमागमनंकृतम् देवशब्दस्यदिव्यगुणार्थक
त्वेदिहर्थकत्वंचकिंप्रमाणकमिति ममतुजगद्रूपयज्ञानुष्ठातेऽस्मादन्यःको
पिनास्तीति नचयज्ञशब्दस्यजगतिशक्तिर्यज्ञानुष्ठानेलक्षणेतिवाच्यम् युग
पद्वृत्तिद्वयाभ्युपगमात्मकदोषग्रस्तत्वात् संभवतितच्छब्दस्ययज्ञेनसाकंसंबन्धे
लक्षणायामवधव्यसम्बन्धकल्पनायांवीजाभावाच्चेति द्वितीयोर्थस्तुसर्वथानि
तःपुनरुक्तिग्रस्तत्वश्चसर्वोक्तदोषगणाभिभूततयोपेक्ष्यते — ॥

**अग्निर्होताकविक्रतुःसत्यश्चित्रश्रवस्तमः देवोदेवेभिरागमत् ॥५॥**

अस्यार्थः अयमग्निर्होताहोमनिष्पादकः कविक्रतुःकान्तप्रज्ञः क्रान्तकर्मावाक
विशब्दःकान्तवचनःक्रान्तदर्शनोभवतीत्यादिनिरुक्तात् क्रतुरितिप्रज्ञायाः
कर्मणोवानामनिघण्टौ सत्यःफलावश्यदाताश्चित्रश्रवस्तमः उत देवैर्हविर्भो
क्तृभिः सहास्मिन्यज्ञेसमागच्छत्विति — ॥

यत्तु कविशब्दंक्रान्तप्रज्ञइत्यर्थंजगत्कर्त्तेतिविवृणोतितन्निरुक्तविरुद्धत्वादुपेक्ष्यम्
यत्तु देवेभिः सर्वज्ञपरमानन्दादिगुणैः सहास्माकंहृदयेऽस्मिन्संसारेचप्रकाश
मागच्छत्वितितदयुक्तम् सर्वज्ञस्यगुणान्तराभावात् ईश्वरस्यसर्वदातत्सहगुणयु
क्तत्वेनतद्राहित्यसम्भावनायाअसत्त्वेन देवेभिरित्यस्यानर्थक्याच्च यस्यय
द्विरहेपिप्राधान्येनक्रियान्वयित्वं सम्भाव्यतेतस्मिन्नेवसहयुक्तेऽप्रधानइति
सूत्रेणतिलैःसहमाषान्वपतीत्यादौतृतीयाविधानेनानन्दादिगुणानांतद्विर
हेतदभावेनसहयोगेदेवेभिरितितृतीयायाअप्यसाधुत्वाच्चेतिदिक् द्वितीयो
र्थोत्वन्वितः पूर्ववत् — ॥

यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि - तवेत्तत्सत्यमङ्गिरः ॥ ६

अस्यार्थः अङ्ग-हेअग्नेदाशुषेहविर्दत्तवते यजमानाय यत्त्वंवित्तगृहपशु प्रजारूपंकरिष्यसि तत्तवेत् तवैवसत्यहेतुरितिशेषः हेअङ्गिरोऽग्नेतद्ध सत्यं यजमानस्यवित्तादिसम्पत्तौसत्यामुत्तरक्रत्वनुष्ठानेनाग्नेरेवसुखंभव तीति अङ्गिरः अङ्गिरा अङ्गाराइतियास्कः एतरेयिणोपिसमामनन्ति प्र जापतिर्दुहितृध्यानोपाख्याने येअङ्गारा आसंस्तेअङ्गिरसोभवन्निति त स्मादङ्गिरोनामकमुनिकारणत्वादङ्गाररूपस्याग्नेरङ्गिरस्त्वम् इति-

यत्तु दयानन्दः प्राणानांरसभूतपरमेश्वरेतिअङ्गिरःशब्दस्यार्थंब्रवीति- तत्प्रामादिकम् पूर्वोक्तनिरुक्तविरुद्धत्वात् आङ्गिरसोऽङ्गानांहिरसः- प्राणोवाअङ्गानांरसः श· कां १४ अ· ४ इतिशतपथवाक्यस्याङ्गिरसश ब्दार्थबोधकत्वाच्च नह्यत्राङ्गिरसशब्दोप्यङ्गिरइति अपिचात्रशतपथवाक्ये प्राणानामङ्गरसत्वेनाभिधानात् प्राणोवाअङ्गिराः श· कां ६ अ· १ इतिश तपथगतवचनानुकूल्येनाङ्गिरःशब्दस्यप्राणार्थकत्वेपिप्राणानांरसभूतपरमे श्वरेत्यात्मकार्थस्यसर्वथाभ्रान्तिमूलकत्वमेव किञ्च अङ्गानांपृथिव्यादीनां सारभूतोन्तर्यामीपरमेश्वरः सर्वस्यप्राणभूतत्वादसौस्तीतिबोध्यमित्यनेनवा क्येनप्राणरूपत्वमीश्वरस्यवदतस्तस्यतत्रप्राणानांरसरूपतयाप्रतिपादनंपूर्वा परविरुद्धतयोपेक्ष्यमेव प्राणानांजडत्वेनतस्यापिजडत्वापत्तेश्च रसरूपत्वेतु रसस्याधेयगुणत्वेनतस्यसर्वाधारत्वानुपपत्तेश्चेति भाषार्थोपिनयुक्तःप्राणा नांप्राणइत्यर्थस्यसंस्कृतवाक्यार्थादनुपलम्भात् इति-

यत्तुभद्रशब्देनपरमानन्दस्वरूपमोक्षरूपसुखमत्राभिधीयतइतिप्रमाणत्वे ननिरुक्तमिमंभद्रंभगेनव्याख्यातंभजनीयंभूतानामभिद्रवणीयंभवद्रमय तीतिवेतिपठन्ति-

तन्मन्दम् निरुक्तस्यविनाविरूपेर्थेतात्पर्यग्राहकत्वात् यद्वैपुरुषस्यवित्तंत द्भद्रंगृहाभद्रंप्रजाभद्रंपशवोभद्रमितिशाट्यायनिब्राह्मणेभद्रशब्दार्थस्यस माम्नानाच्चेति तद्दीत्यास्यभागस्यसकामभागत्वेनमोक्षप्रार्थनायामुत्तरग्रन्थ विरोधाच्च- ॥

उपत्वाग्नेदिवेदिवेदोषावस्तर्द्धियावयम्-नमोभरन्तएमसि ७

अस्याभिप्रायः हेअग्नेवयमनुष्ठातारः प्रतिदिनंदोषावस्तः रात्रावहनिचधिया बुद्ध्यानमोभरन्तः नमस्कारंहस्मादयन्तः उपसमीपेत्वाएमसित्वामभिगच्छाम इति- ॥

यत्तुद-भौतिकाग्नेरनायासेनहोममात्रेप्राप्तत्वान्नमस्करणीयाभावात्माधवाचार्यादिव्याख्यानमन्यथेतिवदति- ॥

तन्न अभिमानिव्यपदेशस्त्वितिसूत्रानुरोधेनाग्न्यधिष्ठातृदेवतायानमस्कार्यत्वात्प्राप्यत्वाच्च ईश्वरवाचकत्वेबहुश्रुतिनिरुक्तादिविरोधस्यास्माभिःसर्वत्रप्रदर्शितत्वाच्च- ॥

यत्तुद्वितीयेऽर्थेवायुवृष्टिशुद्धिकरयज्ञानुष्ठानंशिल्पविद्यामयंचप्राप्नुयामइति कथयति - ॥

तन्मन्दम् देवताप्रसादद्वारकस्वर्गफलकयज्ञादिकर्मप्रतिपादकानांस्वर्गकामोयजेतेत्यादिवाक्यानांवैयर्थ्यापत्तेः अत्रेदंपृच्छ्यते होमोयद्धूममात्रेण वाय्वादिशुद्धिरुतसाङ्गोपाङ्गेनविहितप्रणीताप्रोक्षणीपात्रब्रह्मस्थापनादिसहितेनवा नाद्यःयत्रकुत्रापिघृतादिहोमेनवाय्वादिशुद्धौहोमप्रक्रियायावैयर्थ्यापत्तेः वाय्वादिशुद्धिरूपफलस्याकीर्त्तनेनस्वर्गकामादिपदानामानर्थक्याच्च नद्वितीयः तादृशवाक्यानुपलम्भात् तीर्थेकृत्वागृहागतस्यतत्स्यवाय्वादिशुद्ध्याफलाभावेनाकृतहोमस्यतत्तीर्थप्रदेशागमोतत्फलावाप्तेरितिकृतनाशाकृताभ्यागमप्रसङ्गाच्च होमकर्त्तुःकिञ्चित्कालिकफलाप्यधिकरणत्वेऽक्षय्यंहवैचातुर्मास्ययाजिनःसुकृतंभवतीत्यादिश्रुतीनामानर्थक्यापत्तेश्चनचजगदुपकारकवाय्वादिशोधकहोमकर्मणाहोतुःस्वर्गादिप्राप्तिर्भवतीतिवाच्यम् इन्द्रादिदेवताह्वानतत्पूजनसोमप्रदानादिजन्यतत्प्रसादद्वारकस्वर्गादिफलवाप्तिबोधकानांत्वमेवैनमिन्द्रःप्रजयापशुभिस्तर्पयतीत्यादिवाक्यानांनैरर्थक्यापत्तेः तस्मादुपहासास्पदमनधीतवेदस्यैतद्वचनमिति अधिकमग्रेवक्ष्यते-द्वितीयार्थस्यमन्त्रस्यपदैरलाभात्सर्वथासहेयएवेति- ७ ॥

**राजन्तमध्वराणांगोपामृतस्यदीदिविम्-वर्द्धमानंस्वेदमे ८**

अस्यार्थः पूर्वमन्त्रोक्ताग्नेर्विशेषणानिराजन्तम् दीप्यमानम्- अध्वराणांरा क्षसकृतहिंसारहितानांयज्ञानांगोपांरक्षकम्ऋतस्यसत्यस्यावश्यम्भाविनः फलस्यदीदिविम् योनःपुनःपुनर्भृशंवाद्योतकम्- आहुत्याधारमग्निर्दृष्टाशा स्त्रप्रसिद्धंकर्मफलंसमर्प्यते स्वेदमेस्वकीयगृहेयज्ञशालायांवर्द्धमानम् इति- यत्तु अस्मिन्नेवजन्मनिभवत्कृपयाऽस्माकंमोक्षोनिश्चितोभवेदितिनित्यमि च्छामइतिवदति-

तन्न कर्मकाण्डभागेत्वैहिकपदार्थप्राप्तयेईश्वरः प्रार्थ्यतेनिष्कामभागेतुत त्प्राप्तये इतितदुत्तरग्रन्थविरोधात्- ॥

**सनःपितेवसूनवेऽग्नेसूपायनोभव-सचस्वानःस्वस्तये ९ ॥**

सूपायनः शोभनप्राप्तियुक्तोभव- नःअस्माकंस्वस्तयेसचस्वसमवेतोभव- शेषंस्पष्टम्- इत्यग्निसूक्तंनवर्चम्- ॥

अथवायुसूक्तंनवर्चम्- ॥

**वायवायाहिदर्शतेमेसोमाअरंकृताः-तेषांपाहिश्रुधीहवम्-**

हेदर्शतदर्शनीयवायोकर्मण्येतस्मिन् आयाहि आगच्छ त्वदर्थमिमेसोमाः अरंकृताः अलङ्कृताः तेषांतान् पाहिपिबतत्पानार्थमस्मदीयमाह्वानंश्रुधि शृणुइति अन्वयार्थः वायवायाहिदर्शनीयेमेसोमाअरंकृताअलंकृतास्ते षांपिबशृणुनोह्वानमिति- ॥

**दयानन्दस्तु** हेवायोअनन्तबलसर्वप्राणअन्तर्यामिन् दर्शनप्रेक्षणी यअस्मद्हृदयेआगच्छनित्यंप्रकाशकोभव इमेसोमाः सर्वेपदार्थाभवतैव भूषिताः तान्त्वमेवपाहिरक्षतथाहवंस्तुतिंसद्योनिशामयवायुःपरमेश्व रनामेत्येवंव्याचष्टे- ॥

तन्न ईश्वरस्यमनोवागगोचरत्वेनप्रेक्षणीयत्वाभावात् दृश्यत्वेघटा दिवदनित्यत्वापत्तेश्च आयाहीत्यस्यनित्यंप्रकाशकोभवेत्यर्थकत्वेप्रमा णाभावाच्च सोमशब्दस्यपदार्थमात्रवाचकत्वाभावाच्च पाहीत्यस्य रक्षेतिहवमित्यस्यस्तुतिमितिनिविष्टेनैरुक्तविरुद्धत्वाच्च नचनमो

ब्रह्मणे नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासीति तैत्तिरीयोपनिषदि वायुप
देनस्पष्टं ब्रह्मणो ग्रहणमस्तीति वक्तव्यम् वायोरेव तत्र ब्रह्मत्वप्रतिपादनात्
अतएव तत्र वायुमुद्दिश्य त्वमेव प्रत्यक्षं ब्रह्मासीत्युक्तं ब्रह्मणस्तत्तद्देवतारू
पत्वं प्रतिपादितमेवास्माभिः पूर्वं श्रुत्यनुरोधादित्यलम् द्वितीयेऽर्थे भौतिक
वायुगुणकीर्त्तनमसङ्गतं प्रथममन्त्रोक्तयुक्तिसमूहावलोकनात् अचेतने
वायौ आयाहि सुधिपाहीतिपदप्रतिपादितागमनश्रवणपानरक्षणात्मिक
क्रियाविषयकप्रार्थनाया अन्वयानर्हत्वाच्च नचयेन सर्वे जीवाः स्पृएवन्ति
सच श्रावयति विद्योपदेशार्थं यदाख्यानं भवति तत्राचेतने चेतनवद्व्यवहा
रेण दोषो भवतीति **दयानन्द** कथनं युज्यत इति वाच्यम् श्रोत्रहि तेषि
णो वेदस्य प्रतारकत्वापातात् अभिमानिव्यपदेशस्त्विति सूत्रे तत्तदधिष्ठात्
देवतानां ग्रहणमिति निर्णीतत्वाच्च चेतनाचेतनव्यवहारोच्छेदापत्तेश्च।
यस्य भूमिः प्रमान्तरिक्षमुतोदरम्। दिवं यश्चक्रे मूर्द्धानं तस्मै ज्येष्ठाय ब्रह्मणे
नमः १ यस्य सूर्यश्चक्षुश्चन्द्रमाश्च पुनर्णवः अग्निं यश्चक्र आस्यं तस्मै। २ यस्य
वातः प्राणापानौ चक्षुरङ्गिरसो भवन्। दिशो यश्चक्रे प्रज्ञानीस्तस्मै। ३ अथर्व।
सं। कां १० एषु मन्त्रेषु परमात्मनो विराड्रूपस्य वर्णनम्।
यद्दयानन्दः यस्य भूमिः पादाविवास्ति एवमग्रेपि द्रवस्य सर्वत्राध्याहारं
करोति। ॥

तत्त्वयुक्तम् परमात्मनो मायिकरूपस्य विराजस्तेषां तेषां मायिकतत्तदङ्गत्वे दो
षाभावात् इत्थोपात्तदेहेन श्रीभगवता कृष्णेनायं विश्वरूपोऽर्जुनायापि प्रदर्शि
तः स्पष्टं चैतद्भगवद्गीतायाम् अतएव निरुक्तकारेण यास्केनोक्तम् अ। ७ खं। ४
एकस्यात्मनोऽन्ये देवाः प्रत्यङ्गानि भवन्तीति। ॥

य आत्मदा बलदा इति य। अ। २५ मं १३ द्यौः शान्तिरन्तरिक्षं शान्तिरिति
य। अ। ३६ मं १७ मन्त्रयोर्देवपदस्य विद्वत्परतां वदति।

यत्तद्बालप्रलपितम् अग्निमीळ इति मन्त्रोक्तयुक्तेः विदुषामुपद्रवकरत्वाभा
वाच्च देवविशेषनामसु विश्वेदेवाः साध्या इति पठितत्वाच्च।
यत्तु तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिर इति पुरुषसूक्तमन्त्रव्याख्या

योऽस्ते वेदमनुष्यैर्ग्रहीतुं योग्या इत्यर्थं कल्पयित्वा सर्वे तु न इति वेदानामपि विशेष
णं भवितुमर्हतीति व्याचष्टे- ॥

तदयुक्तम् शूद्रो यज्ञेनवक्लृप्त इति सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्रायनेच्छ
न्तीति श्रुतिभ्यां तं होवाच किंगोत्रो नु सोम्यासीति छान्दोग्योपनिषदि प्र-४
उपनयनार्थिनं जाबालं प्रति गोत्रविषयक प्रश्नस्य श्रवणेन चत्रैवर्णिकातिरिक्त
स्योपनयनानधिकारित्वेनोपनीतस्यैव वेदग्रहणाधिकारितया वेदानां सर्वमनु
ष्यग्राह्यत्वाभावात् जुहोतेरादानेर्थे शिष्टैरप्रयुक्तत्वाच्च शूद्रादीनामितिहास
पुराणरूपेण पञ्चमवेदेनैव सिद्धेः कीर्त्तनाच्चेति- ॥

यत्तु ऋग्वेदादिभाष्यभूमिका- अं-१ प २० वदति मनुष्यदेहधार्यग्निवायुर
व्यङ्गिरोभिः परमेश्वरेण वेदाः प्रकाशिता इति- ॥

तन्मन्दम् अग्न्यादीनां देवयोनित्वे ऽङ्गिरसश्च देवर्षित्वे श्रुतिस्मृत्यादीनि प्रमा
णानि बहूनि सन्ति मनुष्ययोनित्वे प्रमाणस्यादृश्यमानत्वात् वंशब्राह्मणे
ग्निवायुसूर्याणामृषीणां तेषां वंशस्य चावर्णनाच्च- ॥

यत्तु वदति अग्न्यादिभ्यो ब्रह्मणा वेदा अधीता इति- ॥

तत्तुच्छम् यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै इति श्वे
ताश्वतरोपनिषदि पूर्वपदश्रवणात्प्रथमे चतुर्मुखायैव वेदाः प्रकाशितास्तेन
चाग्न्यादिभ्यो दत्तास्तद्द्वारा मन्वादिभ्यः प्रकाशितास्तेनैतत्त्पर्यस्योपलभ्यमा
नत्वात् अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् दुदोह यज्ञसिद्ध्यर्थमिति
मनुवाक्यं तु अग्न्यादिभ्य आकृष्यान्येभ्यो दत्तवानित्यर्थकम् अर्थादग्न्या
दिकृतयज्ञाद्यनुष्ठानद्वारान्यान्ग्राहितवान् अग्निर्वा अकामयत अन्नादो
देवानां स्यामिति श्रुतेर्वृहस्पतिरकामयतेत्यादिश्रुतेश्च तन्मन्त्राधनत्व
षाधनत्वं त्वष्टाय नेति श्रुतेश्चाग्निर्देवानां होतेति श्रुतेश्च ज्ञायते जनशिक्षा
र्थे देवैर्यज्ञादिकर्माण्यनुष्ठीयन्ते स्वोपयोगाभावेपि अत एव सत्यसङ्क
ल्पोपि परमेश्वरो रामकृष्णाद्यवतारेषु लौकिककर्मनरवन्नैव जगन्निरव
हत् इति सिद्धान्तितं देवाधिकारनिर्णये जैमिनीये शास्त्रे-

यत्तु ब्रह्मदिवसप्रारम्भाद्वेदोत्पत्तिं कथयता वेदोत्पत्तेर्वर्षाणि संख्याता

नि १९६०८५२९७६ चैतानिद्वति- ॥ मनु×६

तदपिनमनोहरम् द्विपरार्द्धमितवर्षायुषोहिरण्यगर्भस्यपूर्वपरार्द्धातिक्रमणोत्तरभाविदिवसद्वितीयपरार्द्धस्यसम्प्रतिविद्यमानत्वेनतदैनंदिनप्रलयेजगतोविनाशेपिब्रह्मणोविद्यमानत्वेनतत्रवेदस्थितेरपिवक्तुंशक्यतया वेदतिरोभावाभावेनतत्रवेदोत्पत्तिनिदर्शनयोरयुक्तत्वात् ब्रह्मजन्मादिनात्तद्गणनायाउचितत्वात्-यद्यपिवेदानामीश्वरप्रणीतत्वं नित्यत्वंचास्माकंनयेपि श्रुतिस्मृतिपुराणेतिहासयुक्तिसिद्धं तथापि दयानन्द स-प्रणीतयुक्तिभिर्नित्यत्वमीश्वरोक्तत्वंचनघटत इति तत्रदर्श्यते-

यत्तुईश्वरप्रणीतत्वाद्वेदानांनित्यत्वंतस्यसर्वसामर्थ्यस्यनित्यत्वात्इति तन्नसङ्गच्छते जगतोपितथाविधत्वान्नित्यत्वापत्तेः वाचारम्भणंविकारोनामधेयंमृत्तिकेत्येवसत्यमितिछां० श्रुतेः कारणनित्यतस्यकार्यनित्यत्वाप्रयोजकत्वात् नचकार्यरूपशब्दस्यलौकिकस्यानित्यत्वेपिपरमात्मज्ञानस्यशब्दार्थसम्बन्धस्यनित्यत्वमेवभवितुमर्हतितस्यज्ञानक्रिययोः स्वभावसिद्धयोरनादिनोर्नित्यत्वेनतत्सर्वसामर्थ्यस्यनित्यतयातद्विद्यामयवेदानामपीति सूर्याचन्द्रमसौधातायथापूर्वमकल्पयदितिश्रुत्यासूर्यचन्द्रादिरचनातस्यज्ञानमध्येपूर्वकल्पेयथासीत्तथास्मिन्कल्पेपिकृतेति तद्वद्वेदानामपितज्ज्ञानमध्येस्थितत्वात्तेषांनित्यत्वमितिवाच्यम् दृष्टान्तवैषम्यात् सार्वज्ञ्यभङ्गभियासर्वस्यनित्यानित्यस्यतज्ज्ञानविषयत्वमितिकल्पनायाआवश्यकत्वेनसूर्यादीनामपितज्ज्ञेयत्वेऽनित्यत्वेन वेदानामप्यनित्यत्वापातात् नहिघटोत्पत्तेः पूर्वंघटस्यकुलालबुद्धिस्थत्वेपिनित्यत्वंसम्भवति किञ्चवेदानित्याईश्वरेप्रलयेकार्यरूपतयातिष्ठन्तिकारणरूपतयावा नाद्यःवर्णसङ्घातरूपस्यतस्यतत्रनित्यतयावस्थितेरभावात् नद्वितीयःसर्वस्यैवकार्यजातस्यविनाशेकारणेवस्थितेस्तस्यापीश्वरीयकण्ठताल्वाद्यभिघातरूपेकारणेवस्थितेः कल्पनेपिपरमात्मासःशरीरीतिभवत्सिद्धान्तभङ्गापत्तेर्मूषिकभियास्वगृहंदग्धमितिन्यायंस्यावकाशात् नचनहिमयाकण्ठताल्वाद्यभि

घानरीश्वरेऽवस्थितिः कथ्यतेऽपितुज्ञानमध्ये इतिवाच्यम् विकल्पासह
त्वात् तथाहि किंवेदाः प्रलये ईश्वरीयज्ञानमध्ये शब्दरूपेणास्थितास्तद
र्थज्ञानरूपेणवास्थिता आहोस्वित् तदर्थरूपेणवा आद्येज्ञानरूपे गुणेश
ब्दस्यगुणस्यावस्थानं कल्पयितुमशक्यम् गुणेगुणानङ्गीकारात् द्विती
ये वेदार्थज्ञानस्य स्मृत्यात्मकस्येश्वरीयज्ञानाधारकत्वेन युक्तिसहं द्वयोर्गुण
त्वात् सर्वज्ञानस्याधारस्य ज्ञानत्वापत्तेश्च तृतीये वेदार्थस्य सृष्ट्युत्पत्तेः प्राक्
कालेन ज्ञानमीश्वरे तिष्ठतीश्वरो ज्ञान इत्यन्योन्याश्रयोऽभेदे भेदे तु ईश्वरे द्वै
तापत्तिरिति। ॥

यत्तु नित्याः शब्दा नित्येषु शब्देषु कूटस्थैरविचालिभिर्वर्णैर्भवितव्यमनपायो
पजनविकारिभिरिति महाभाष्यस्य पतञ्जलिवचनात् सर्वेसर्वपदादेशा दाक्षी
पुत्रस्य पाणिनेरिति महाभाष्याच्च श्रोत्रोपलब्धिर्बुद्धिनिर्ग्राह्यः प्रयोगेणा
भिज्वलित आकाशदेशः शब्द इति अइउण् सूत्रस्य भाष्याच्च एकैकवर्णवर्ति
नी वागिति महाभाष्यप्रमाणात् प्रतिवर्णं वाक्क्रियायाश्च नित्यत्वेन शब्दस्य
यावद् गौरित्युक्ते यावद्गकारे न तावदौकारे यावदौकारे न तावद्विसर्ग इति
एवं च वाक्क्रियोच्चारणस्यापायोपजनौ नाम लोपागमौ भवतो नाक्षराणां स
र्वशब्दस्येति अतआकाशवद्वक्ताति नित्यः नित्यस्तु स्याद्दर्शनस्य परार्थ
त्वादिति जैमिनिसूत्रात् उच्चारणस्यार्थज्ञापनार्थत्वात् सोऽयं ककार इति
प्रत्यभिज्ञानाच्च शब्दस्य नित्यत्वेनेति वदन्ति। ॥

तन्न सर्वस्यैव शब्दस्य वैयाकरणजैमिनिमतयोर्नित्यत्वे ईश्वरप्रणीतत्वाद्वे
दानां नित्यत्वं नान्येषामिति तदुक्तेर्व्याहतत्वात् वर्णानां नित्यत्वेऽपि तत्पदानुपू
र्व्या अनित्यत्वाच्च। ॥

यत्तु तद्वचनादाम्नायस्य प्रामाण्यमिति वैशेषिकशास्त्रकर्तृकणादमुनिवच
नात् मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यादिति गौतमसूत्रात्
अ० २ पा० १ सू० ६७ इष्टभवत्तु सामान्याच्चानुमानमिति तत्रैव वात्स्याय
नवचनाच्च पातञ्जलशास्त्रे पतञ्जलिना स एष पूर्वेषामपि गुरुः कालेनान
वच्छेदादिति अ० १ पा० १ सू० २६ सूचितत्वाच्च निजशक्त्यभिव्यक्तेः स्वतः

प्रामाण्यम् इतिकापिलशास्त्रा अ॰ ५ सू॰ ५५ च्च शास्त्रयोनित्वा अ॰ १ पा॰ १ सू॰ ३ दितिवादरायणसूत्राच्च अतएवचनित्यत्वम् अ॰ १ पा॰ ३ सू॰ २९ इति भगवद्व्याससूत्राच्च सूर्यवत् स्वप्रकाशत्वेन परप्रकाशकत्वंवेदानांनित्यत्वं चावगम्यतइतिवदति सपर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपाप विद्धम् - कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यइतिय॰ अ॰ ४ मं॰ ८ ईशावास्योपनिषद्गतमन्त्राच्चनित्यत्वमितिक थयति - ॥

तन्न वेदविरुद्धस्य सर्वस्याप्रमाणत्वेन वेदस्येश्वरप्रणीतत्वप्रमाणत्वनित्यत्व साधनेवेदमूलकप्रामाण्यवतां तेषामेवप्रामाण्यस्यानिष्पन्नत्वेनैतत्साध नस्यानुचितत्वात् वेदवाक्यैरेवतत्साधनआत्माश्रयाच्च सर्वशास्त्राणांभ वत्कल्पितार्थकवेदविरुद्धत्वेनतत्प्रमाणोपन्यसनस्यभवतासर्वथाकर्त्तु मयुक्तत्वाच्च - ॥

यत्त्वीश्वरकर्त्तृकोपदेशाध्यापनाभ्यांविनानकस्यचिदपिविद्यायाअनुभवः स्यादिति - ॥

तन्नयुज्यते अशरीरेणतेनोपदेशाध्यापनयोरसम्भवात् सशरीरस्यभव न्मतेऽस्वीकाराच्च यदीश्वरस्यात्मभूबुद्धिप्रेरकत्वेनतदध्यापकत्वमुररीक्रि यतेनदातादृशज्ञानविशिष्टस्यैवात्मभुवस्तेनोत्पादनमित्येवस्वीकार्यंला घवात् अध्यापनाङ्गीकारस्त्वेतदादिव्यशरीरावच्छिन्न ईश्वरोऽध्यापयि तास्वीकार्य्य इति - ॥

यत्तुनित्यस्यनामगुणकर्माण्यपिनित्यानिभवन्तितदाधारस्यनित्यत्वात्ते वाधिष्ठानमन्तरानामगुणकर्मादयोगुणाःस्थितिंलभन्ते तेषांपराश्रि तत्वात् यन्नित्यंनास्तितनतस्यैतान्यपिनित्यानीति - ॥

तन्न नामगुणकर्मविशिष्टवस्तुनोनामाद्याश्रयत्वेन घटवदनित्यत्वा त् अतएवब्रह्मणोनामरूपादिकंनिर्गुणंमिः क्रियंशान्तमितिसाक्षीचे ताःकेवलोनिर्गुणश्चेति अस्थूलमनणवह्रस्वमदीर्घमित्यादि श्रुतिभिः प्रतिषिध्यतस्यानामगुणकर्मत्वेननित्यत्वं साधितम् सम्बन्धसामान्य

शून्यस्य ब्रह्मणः सम्बन्धसामान्यान्तर्गतशब्दविशेषवाच्यतारूपसम्बन्धस्या प्ययोगात् एवं आधाराधेयभावस्यापि नामादीनां नित्यत्वे द्वैतापत्त्याएकोदेव इति द्वितीयाद्भयम्भवतीति श्रुतिप्रतिपादितैकत्वाभयत्वादिभङ्गापत्तेश्च दिव्यशरीरावच्छिन्नस्य मानुषादिशरीरावच्छिन्नस्य च मायोपाधिकस्य कल्पित नामरूपाद्याश्रयत्वेपि निरवच्छिन्नस्य नामगुणक्रियाशून्यत्वस्य वेदेनत्वात्तस्यैव प्रतिपादनाच्च वेदस्य जन्यत्वं पूर्वं मुक्तानस्य नित्यत्वापादनमपि नसङ्गच्छते जन्यस्य घटादिवदनित्यत्वात् द्वैतापाताच्च नार्किकैरपि सत्यप्रमाणरत्यन्तस्य जगतोऽनित्यत्वस्यैवाभ्युपगमाच्च तन्न येनित्यस्याप्याकाशस्य गुणः शब्दोऽनित्यतयैव स्वीकृतः वैदिकैः श्रीभगवत्पूज्यपादैः शङ्कराचार्यादिभिः सतउत्पन्नस्य जगतोऽसत्वमेव प्रतिपादितम् नेह नानास्ति किञ्चन वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्यादिकाः श्रुतयोपि जगतो नित्यत्वे प्रमाणम् नचेश्वरस्य ज्ञानानन्दाद्यनधिष्ठानत्वेज्ञत्वादुः[illegible]द्यापत्तिरितिवाच्यम् नित्यविज्ञानमानन्दं ब्रह्मेति सत्यं ज्ञानमनन्तं ब्रह्मेति आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दो ब्रह्मेति व्यजानात्- को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्- एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति श्रुतिभिस्तस्य ज्ञानानन्दसत्त्वरूपत्व प्रतिपादनात्-

यत्तु नित्यं हि चोत्पत्तिविनाशाभ्यामितरद्भवितुमर्हति उत्पत्तिर्हि पृथग्भूतानां द्रव्याणां संयोगविशेषाद्भवति तेषामुत्पन्नानां कार्यद्रव्याणां सति वियोगे विनाशश्च संघाताभावात् अदर्शनं च विनाशः ईश्वरस्यैकरसत्वान्नैव तस्य संयोगवियोगाभ्यां संस्पर्शोपि भवतीति-

तदयुक्तम् उत्पत्तिविनाशाभ्यां क्रियाभ्यामाश्रयाभ्यां नित्यस्य वाऽनित्यस्य वा द्रव्यस्याश्रयत्वेनैवेतरत्वे संभवति नित्यं ताभ्यामितरद्भवितुमर्हतीत्यस्य वालप्रलपितत्वात् एतस्माद्वा आत्मन आकाशः सम्भूत आकाशाद्वायुरित्यादिश्रुत्यात्मन आकाशोत्पत्तेरभिधानात् द्रव्यान्तरसंयोगमन्तरेणैवाकाशाद्वायोश्चेति असङ्गो ह्ययम्पुरुष इत्यादिश्रु

तेर्ज्ञानानन्दसत्स्वरूपस्य अद्रव्यस्यात्मनो द्रव्यान्तरसंयोगस्यापि वक्तुम
शक्यत्वाच्च नच ज्ञानं वा सुखं मे जातं नष्टं चेति प्रतीतेर्ज्ञानानन्दयोरुत्पादवि
नाशप्रामाणिकत्वेनाहं सुख्यहं दुःखी ज्ञाता ज्ञो वेत्ति च प्रत्ययात्तयोराधेयत्वेन चात्म
नस्तद्रूपत्वे नित्यत्वापत्तिरिति वाच्यम् व्यञ्जकान्तःकरणवृत्त्युत्पादविना
शाभ्यां तयोरुत्पादविनाशोपलम्भात् व्यञ्जकोत्पादविनाशाभ्यां जातेरिव ध्व
न्युत्पादविनाशाभ्यां शब्दस्येव वेति अन्तःकरणावच्छिन्नो हि चिदात्मा प्रमाता
तथा चान्तःकरणतद्वृत्त्योराधाराधेयभावः अन्तःकरणावच्छिन्नचिदात्मतद्वृ
त्त्यवच्छिन्नानन्दज्ञानयोरुपचर्य्यते इति गौतमादीनामप्यत्रैव तात्पर्य्यम् उप
चर्य्यमाणव्यावहारिकाधाराधेयत्वस्यैतैर्निरूपणात् अन्यथात्मनो विभुत्वेन
पाषाणादावपि ज्ञानसुखोपलब्धिः स्यान्न चेयं प्रसज्येतेति दिक् अदर्शनं च विनाश इत्यत्रा
दर्शनशब्देन किमुच्यते चक्षुरिन्द्रियाविषयत्वम्वा सर्वेन्द्रियजन्यज्ञानाविषयत्व
म्वा नाद्यः अगम्यस्थलगतदृश्यपदार्थस्य सतोऽपि विनाशाश्रयत्वापत्तेः न द्विती
यः परब्रह्मणः सर्वेन्द्रियागोचरत्वेन विनष्टत्वापातात् सङ्घातवादो बहुधा वेदा
न्तशास्त्रे निराकृतो न उपरम्यते- संयोगविभागौ हि गुणौ ताभ्यां सह कस्यचिद
पि न स्पर्शः शीतोष्णानुष्णाशीतभेदैस्त्रिविधस्य भूतचतुष्टयगतस्य स्पर्शस्य
त्वगिन्द्रियग्राह्यगुणत्वेनात्मनः संयोगविभागाभ्यां संस्पर्शस्यासम्भाव्यमान
त्वेनैकरसत्वेन हेतुनानन्तसंस्पर्शानाश्रयत्वकथनं सर्वथास्वस्मिन्नशास्त्रज्ञताद्यो
तकमेवेत्यलम्

यद्दयानन्द यद्यत्संयोगजन्यं तत्तत्कर्त्रपेक्षं कर्त्तापि संयोगजश्चेत्तदा न तस्य
संयोगजस्य प्रकृतिपरमाण्वादीनां संयोगकरणेन सामर्थ्यं भवितुमर्हतीति तस्मा
त्तेषां सूक्ष्मत्वात् यद्यस्मात्सूक्ष्मं तत्तस्मात्मा भवति स्थूले सूक्ष्मस्य प्रवेशार्हत्वा
त् अयोग्निवत् यथा सूक्ष्मत्वादग्निः कठिनं स्थूलमयः प्रविश्य तदवयवानां पृ
थग्भावं करोति तथा जलमपि पृथिव्याः सूक्ष्मत्वात्तत्कणान्प्रविश्य संयुज्यमे
कपिण्डं करोति छिनत्ति च तथा परमेश्वरः संयोगविभागाभ्यां पृथग्भूतो वि
भुरस्त्यतो नियमेन रचनं विनाशं च कर्त्तुमर्हति न चान्यथा यथा संयोगवियो
गान्तर्गतत्वानास्मदादीनां प्रकृतिपरमाण्वादिसंयोगवियोगकरणे सामर्थ्य

मस्तित्येश्वरेऽपिभवेदितिवदतिनद्देवानांप्रियमनोरञ्जकमेव- कर्त्तारम्बिना
पिधरणीसलिलसंयोगादिभिरङ्कुराद्युत्पत्तिदर्शनात् जलादौशैवालादिद
र्शनाच्च नायंनियमोयद्यत्संयोगजन्तत्कर्त्रपेक्षमिति घटादिकर्त्तापिकुला
लादिर्मातापित्रवीर्यरक्तसंयोगजोभवत्येव नह्यनवस्थाभियाप्रत्यक्षसिद्धंक
र्त्तरिसंयोगजत्वंनिराकर्त्तुंशक्यते- ॥

यच्चसंयोगजस्येत्यादि- ॥

तदपिन अग्निःपूर्वेभिरितिमन्त्रटीकाभाषार्थेत्वयेश्वरसामर्थ्यप्रकृतिःप
रमाणवश्चेत्युक्तं तथाचसमर्थकृतिसामर्थ्यस्यप्रकृत्यादेःसंयोगएकासम्भवी
द्रव्ययोरेवसंयोगइतिनियमेनतेषामद्रव्याणांसंयोगस्यैववक्तुमशक्यत्वेनक
स्यचिदपितेषांसंयोजनेनसामर्थ्यसंयोगजासंयोगजस्येतिकिञ्च प्रकृत्यादी
नांसंयोजनेसंयोगजस्यनसामर्थ्यमित्युक्तंयाभवन्मते आकाशादेस्तत्रसाम
र्थ्यमस्तुवियतःपरमसूक्ष्मत्वात्तेषामात्मत्वमपिमदत्तुजीवात्मनश्च नायम
पिनियमःसूक्ष्मात्स्थूलोत्पत्तिरिति स्थूलादपितूलात्कौशेयाच्चसूक्ष्मस्यतन्तो
रुत्पत्तिदर्शनात् स्थूलाद्वटवृक्षात्सूक्ष्मस्यफलस्यकार्यस्यदर्शनाच्च नापि
संयोगवियोगौचेतनेनैवकर्त्तुंशक्यौ अचेतनयोरपिजलवाय्वोस्तृणादिसंयो
जनवियोजनयोःसामर्थ्यस्योपलभ्यमानत्वात् द्रव्यत्वेनसंयोगविभागाभ्यां
गुणाभ्यांपृथग्भूतत्वाच्च नचतदैक्षतबहुस्यामितिश्रुतेर्यतोवाइमानिभूता
निजायन्तइतिश्रुतेश्चचेतनएवजगत्कर्त्ताकश्चनकल्प्यइतिवाच्यम् तस्या
नवच्छिन्नत्वेननिरवयवत्वेनचास्थूलानणुत्वेनचप्रदेशान्निर्गमनाविषयत्वा
त् तथाचश्रूयते शत० कां १४ अ० ६ ब्रा० ८ सहोवाचैतद्वैतदक्षरंगा
र्गिब्राह्मणाअभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छा
यमतमोवाय्वनाकाशमसत्वमरसमस्पर्शमगन्धमचक्षुष्कमश्रोत्रमवाग
मनोतेजस्कमप्रमाणमसुखमनाममागोत्रमजरममरमभयममृतमरजोऽश
ब्दमविवृतमसंवृतमपूर्वमनपरमनन्तरमबाह्यंनतदश्नोतिकश्चनेतिशा
रीरकेभाष्ये अणोरणीयान्महतोमहीयानितिश्रुतिश्चेति- ॥

यत्तुसत्यसामर्थ्येश्वरादुत्पन्नत्वेनवेदानांनित्यत्वमितिवदसि- ॥

नन्व भवदीत्याईश्वरसामर्थ्यस्य प्रकृत्यादेः परिणामित्वेनज्ञानस्यापि वेद
रूपेण परिणतत्वे घटादिवदनित्यत्वापात्तः तथा च त्वदीत्या न सत्यसामर्थ्य
मीश्वरस्य नापि नित्यत्वानाधिकरणत्वं नापि वेदानां प्रकृत्यादीनां च नित्यत्वं सि
द्धमिति सामर्थ्यस्य प्रकृत्यादेः परिणामित्वेन विनाशेतस्यासमर्थत्वापत्तिश्च
ज्ञानस्यापि परिणामित्वेन विनाशेऽज्ञत्वापत्तिश्चेत्यलम् - मम तु मायाविशि
ष्टस्य ब्रह्मण उपादानत्वं निमित्तत्वं च जगतः कुलालवत्चेतनत्वान्निमित्तत्वं घ
टे मृदइव सत्कार्येतस्यानुगमात्प्रकृतित्वमनुगम्यते हि जगति मायाशबलं
ब्रह्म तत्र सच्चिदानन्दत्वं ब्रह्मणो लक्षणं विकारित्वं तु मायायास्तदुभयमपि
जगत्यपेक्षामहे घटोऽस्तीति सद्रूपत्वं घट उत्पद्यते विनश्यति चेति विकारित्व
म् नप्रकृतिपरमाण्वादीनामुपादानत्वम् श्रुत्यनुक्तत्वात् उत्पत्तिप्रतिपा
दिकाः श्रुतयस्तु एतस्माद्वा आत्मन आकाशः सम्भूत इत्यादि तैत्तिरीयके
सदेव सोम्येदमग्र आसीदित्युपक्रम्य तदैक्षत बहु स्यामिति तत्तेजोऽसृजतेति
छान्दोग्ये यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः त
थाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापियन्तीत्याथर्वणे तद्धेदं
तर्ह्यव्याकृतमासीन्नामरूपाभ्यामेव व्याक्रियतेति वाजसनेये आत्मसदक्षर
व्याकृतशब्दैर्ब्रह्मैवाभिधीयते श्वेताश्वतरोपनिषदि मायाया उपादा
नत्वं श्रूयते परमात्मनस्तन्नियन्तृत्वं मायांतु प्रकृतिं विद्यान्मायिनन्तु महे
श्वरमिति वाच्यम् मायायाः परमात्मशक्तित्वेन शक्तिमत एवात्मन उपादान
त्वावश्यम्भावात् दाहशक्तियुक्ताग्नेर्दाहकत्वव्यवहारदर्शनात् आत्मश
क्तित्वं च मायायास्तस्यामेवोपनिषदि श्रूयते ते ध्यानयोगानुगता अपश्य
न्देवात्मशक्तिं स्वगुणैर्निगूढामिति - ॥

भगवान्बादरायणोऽपि प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधादि
ति अ० १ पा० ४ सूत्रयामास तेनैव परमाणूनां कारणतापि
निराकृता तथा च सूत्रम् एतेन शिष्टापरिग्रहा अपि व्याख्या
ता इति अ० १ पा० ४ ॥
अस्यार्थः मनुव्यासादिभिः केनाप्यंशेनापरिगृहीता ये अण्वादिकारणवा

दास्तेपिव्याख्याता निराकृता द्रष्टव्या इति एतेनमायाविशिष्टब्रह्मण एवा
भिन्ननिमित्तोपादानादेतज्जगद्विवर्त्तमिति सिद्धम् तस्माद्वा एतस्मादात्म
नआकाशः सम्भूतः आकाशाद्वायुर्वायोरग्निरग्नेरापअद्भ्यः पृथिवी पृथिवी
तओषधयः ओषधीभ्योन्नम् अन्नाद्रेतः रेतसः पुरुष इति तैत्तिरीयकश्रुतौ पु
रुषशब्देन शिरः पाण्याद्याकारयुक्तो देहोऽभिधीयते सचदेहो ब्रह्मादिस
म्बान्तो बहुप्रकारः तत्र ब्रह्मदेहस्यातिशयपुण्यपुञ्जफलरूपत्वादितर
सकलदेहकारणत्वेनाद्यत्वम् तथाचश्रुतिः हिरण्यगर्भः समवर्त्तताग्र इ
त्यादि ब्रह्मादेवानां प्रथमः संबभूव विश्वस्य कर्त्ता भुवनस्य गोप्तेति च स्मृति
श्च तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामह इति यत्तत्कारणमव्यक्तं नि
त्यं सदसदात्मकम् तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यत इति मनुः अ
मैवेयशाखायामपि श्रूयते तस्यास्य प्रोक्ता अग्र्यास्तनवो ब्रह्मा रुद्रो विष्णुरि
त्यथ यो ह खलु वावास्य राजसोंऽशोऽसौ योयं ब्रह्माथ यो ह खलु वावास्य तामसों
शोऽसौ योयं रुद्रोथ यो ह खलु वावास्य सात्त्विकोंऽशोऽसौ स योयं विष्णुः स वा एष
एकस्त्रिधाभूत इति उत्तरतापनीये मायां प्रकृत्य श्रूयते च तेषां चित्रास्तु ह
ठाव हङ्कुराणां भिन्नाङ्कुरेष्वपि गुणाभिन्नाः सर्वत्र ब्रह्मविष्णुशिवरूपि
णीचैतन्यदीप्तेति एवं वेदस्यापि वियदादिवद्ब्रह्मविवर्त्तत्वम् यो ब्रह्मा
णं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मा इति श्रुतेरीश्वरेण हिरण्यग
र्भाय वेद प्रदानम् परमात्मसर्वज्ञव्यासमन्वादिवाक्येभ्यो वेदस्यापौरु
षेयत्वं व्यावहारिकं नित्यत्वं च स्वीक्रियते ॥

स्यादेतत् शास्त्रयोनित्वादित्यादि प्रमाणैर्वेदस्यापौरुषेयत्वेपि तस्य नित्य
त्वं कथं सङ्गच्छेत तत्र व्याप्तिवचनावत्वादयः शब्दा व्यक्तेश्च नित्यत्वेन यास
ह सम्बन्धो नित्यो भवेत् विग्रहादिमत्त्वे तु सावयवत्वेन वस्वादिदेवानामनि
त्यत्वात् ततः पूर्वं वस्वादिशब्दो न तस्यार्थेन संबद्ध आसीत् तदर्थस्यैवाभावात् न
तयोरन्यत्वे वस्वादौ वस्वादिशब्दसंबन्धः प्रादुर्भवन् नित्यस्य शब्दस्य नित्येना
र्थेन नित्ये संबन्धे प्रलीयमाने देवदत्तादिशब्दसंबन्धवत् पुरुषबुद्धिप्रभव इ
ति तत्सर्वं को वा कार्यं प्रत्ययोऽपि पुरुषबुद्ध्याधीनः स्यात् पुरुषबुद्धिश्चमा

नान्तराधीनजन्मेतिमानान्तरापेक्षतया अनपेक्षत्वादिहेतुभिः स्थापितं वेदस्यप्रामाण्यंव्याहन्येतेतिचेन्न- ॥

वैदिकाच्छब्दान्निमित्तभूताद्ब्रह्मोपादनकदेवादिजगदुत्पत्तेः श्रवणात् नचैतावताशब्दार्थसम्बन्धस्यानित्यत्वम् वस्तुत्वादिजातेर्वातदुपाधेर्वाकयाचिदाकृत्यावच्छिन्नस्यनित्यत्वात् नहिगवादिव्यक्तीनामुत्पत्तिमत्त्वे तदाकृतीनामप्युत्पत्तिमत्त्वंस्यात् द्रव्यगुणकर्मणांहिव्यक्तयउत्पद्यन्ते नाकृतयस्ताभिः सम्बन्धोस्तिशब्दानाम् व्यक्तीनामानन्त्यात्ताभिः संबन्धग्रहणानुपपत्तेः तथाचदेवादिव्यक्तिप्रभवाभ्युपगमेपितदाकृतेर्नित्यत्वान्नकाचिदनुपपत्तिः आकृतिविशेषस्तुमन्त्रादिभ्योदेवादीनांविग्रहवत्त्वाद्यवगमादवगन्तव्यः स्थानविशेषसम्बन्धनिमित्ताश्चेन्द्रादिशब्दाः सेनापत्यादिशब्दवत् योयस्तत्तत्स्थानमधितिष्ठतिसस इन्द्रादिशब्दैरभिधीयतइति तथाचश्रुतिः एतइतिवैप्रजापतिर्देवानसृजतासृग्रमितिमनुष्यानिन्दवइतिपितृंस्तिरः पवित्रमितिग्रहानाशवइतिस्तोत्रंविश्वानीतिशस्त्रमभिसौभगेत्यन्याः प्रजाइति स्मृतिरपि अनादिनिधनानित्या वागुत्सृष्टास्वयम्भुवा आदौवेदमयीनित्यायतः सर्वाः प्रवृत्तयइति नामरूपंचभूतानांकर्मणांचप्रवर्त्तनम् वेदशब्देभ्यएवादौनिर्ममेसमहेश्वरइतिच चिकीर्षितमर्थमनुतिष्ठंस्तस्यवाचकंशब्दंपूर्वंस्मृत्वापश्चात्तमर्थमनुतिष्ठतीतिसर्वेषांनः प्रत्यक्षमेतत् तथास्रष्टुः स्रष्टेः पूर्वंवैदिकाः शब्दामनसिप्रादुर्बभूवुः पश्चात्तमनुगतानर्थान्ससर्ज्जेतिगम्यते तथाचश्रूयते सभूरितिव्याहरन्भूमिमसृजतइति तथाचवर्णानामनित्यत्वात्स्फोटरूपादभिधायकात्क्रियाकारकफललक्षणंजगदभिधेयभूतंप्रभवतीति इममेवार्थंश्रीभगवान्वेदव्यासश्चाह सूत्रैः ॥

श्रुतिस्मृतिभ्याम् २४

शब्दइतिचेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् अ० १ पा० ४ सू० २७ वर्णाएवतुशब्दाइतिभगवानुपवर्षः अ० १ पा० ४ सू० २८ अतएवचनित्यत्वम् अ० १ पा० ४ सू० २९ समाननामरूपत्वाच्चावृत्तावप्यविरोधोदर्शनात्स्मृतेश्च अ० १ पा० ४ सू० ३०

एतेष्वग्निमन्त्रार्थः संक्षिप्तोयम् योब्रह्माणं विदधातीतिश्रुतेर्योहवा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति अध्यापयति वा स्थाणुं वर्च्छति गर्त्तं वा प्रतिपद्यत इत्युपक्रम्य तस्मादेतानि मन्त्रे मन्त्रे विद्यादिति श्रुतौ ऋष्यादिज्ञानपूर्वकमेव मन्त्रेणानुष्ठानदर्शनाच्च तेषांयेयानि कर्माणीति स्मृतेश्च सूर्याचन्द्रमसाविति मन्त्राच्च यथापूर्वमित्यस्य पूर्वकल्पानुरोधेनेत्यर्थः अतोनाकस्मिकत्वं जगत इति नच शब्दस्य वेदस्य स्यजन्यत्वेनित्यत्वं कथमिति वाच्यम् व्यावहारिकनित्यत्वस्य पूर्वमुक्तत्वात् अन्यथा द्वैतापत्तेरिति- ॥

यत्तु अत्र चत्वारो विषयाः विज्ञानकर्मोपासनाज्ञानकाण्डभेदात् तत्रादिमो विज्ञानविषयो मुख्यः तस्य परमेश्वरादारभ्य तृणपर्यन्तपदार्थेषु साक्षाद्बोधान्वयत्वात् तत्रेश्वरानुभवो मुख्यः तस्य सर्वपदार्थेभ्यो मुख्यत्वादिति- ॥

तन्मन्दम् विज्ञानकाण्डेनैव तत्त्वाभेचतुर्थज्ञानकाण्डकल्पनायानैरर्थक्यात् सर्वैः शास्त्रकारैर्वेदकाण्डत्रयस्यैव निरूपणाच्च- धर्मब्रह्मणी वेदैकवेद्य इति जैमिनिसूत्रविरोधाच्चेति- ॥

यत्तु परापरविद्ययोर्मध्ये पदार्थगुणज्ञानमपरा ईश्वरज्ञानं परेति तेव्यादक्षते- ॥

तन्न तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोथर्ववेदः शिक्षाकल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति अथ परा यया तदक्षरमधिगम्यत इति मुण्डकोपनिषदि खं०१ मं०५ कर्मकाण्डोपासनारूपायाः स्वर्गादिजनिकाया विद्याया अपरात्वेन निर्गुणब्रह्मप्रतिपादिकाया मोक्षप्रापिकायाः परविद्यात्वेन निरूपणात्- ॥

यत्तु कर्मकाण्डरूपो द्वितीयो वेदविषयः सचाग्निहोत्राद्यश्वमेधपर्यन्तः सुगन्धिमिष्टपुष्टरोगनाशकगुणैर्युक्तस्य सम्यक्संस्कारेण शोधितस्य द्रव्यस्य वायुवृष्टिजलशुद्धिकरणार्थमग्नौ होमः क्रियते स तद्द्वारा सर्वजगत्सुखकारको भवति यंच भोजनाच्छादनयानकलाकौशलयन्त्र

सामाजिकनियमसंयोजनसिद्धयेविधत्तेसोधिकतयास्वसुखायैवभवति
ऐतरेयब्राह्मणे पं॰१ अ॰२ यज्ञोपितस्यैजनतायैकल्प्यतेयत्रैवंविद्वान्हो
ताभवतिशतपथब्राह्मणे कां॰५ अ॰३ अग्नेर्वैधूमोजायतेधूमादभ्र
मभ्राद्वृष्टिरग्नेर्वाएताजायन्तेतस्मादाहतपोजाइति तैत्तिरीयोपनिषदि
तस्माद्वाएतस्मादात्मनआकाशःसम्भूतइत्यादिचतदर्थंप्रमाणयति-
तद्धृयाजल्पनंपण्डितंमन्यस्यनास्तिकशिरोमणेः – वाय्वादिशुद्धयेहो
मविधानंवेदेक्वचिन्नश्रूयते किन्तुहव्यदर्थंहोमेनदेवताप्रसादेवृष्टिप्राप्त्या
ऽन्नादीनांप्रादुर्भावेजगद्रक्षणंभवति भवतुनामपरन्तुवाय्वादिशुद्धयेचि
कित्सैवनमहताप्रबन्धेनवेदेनिरूप्यते किञ्चनायंहोमःसर्वजगत्सुखा
यैवभवति इन्द्रशत्रुर्विवर्द्धस्वमाचिरंजहिविद्विषमितिमन्त्रे इन्द्रदेवता
शातनायापिहोमस्यवृत्रोत्पादनार्थमुक्तत्वात् नहिवृत्रासुरोत्पत्तौहोमेन
वाय्वादिशुद्धिद्वारालोकानांसुखमुत्पादितं किन्तुपरमदुःखमिति तत्र
स्वरापराधेनहत्त्वहननेजातेपियथावत्स्वरोच्चारणंचेदभविष्यत्तदाकथ
मिन्द्रत्राणमभविष्यत् किञ्च विविधप्राणिनिष्ठाशुभकर्मजन्यरोगा
णांनिवृत्तिसमयंतत्प्रवृत्तिकरयत्नंचविनैवान्यकृतहोमेनतद्धानौविचि
त्रफलककर्मव्यवस्थाभङ्गापत्तेश्चकारागृहगजनोद्देश्यकनृपानभिमते
ष्टवस्तुप्रदानवत् तत्कर्मफलप्रदेश्वरेच्छाप्रतिकूलत्वेनहोमस्यानिष्ट
प्रापकत्वापत्तेश्चकृतहोमस्यदेशान्तरगमनेतत्स्वच्छदेशागमनेवातत्रहोम
द्यभावेनवाय्वाद्यशुद्धेःसरोगत्वेहोमदेशस्थानामकृतहोमानामपि
वाय्वादिशुद्ध्याचारोगित्वेकृतहान्यकृताभ्यागमप्रसङ्गाच्च पुत्रेष्टिराज्ये
ष्टिधनेष्ट्यादिप्रतिपादकवेदवाक्यानामिन्द्राग्न्यादिप्रसादसर्वकतत्तत्
फलावाप्तिबोधकानांभिन्नाभिन्नपद्धतिविधानस्यचवैयर्थ्यापत्तेर्वाय्वा
दिशोधकत्वेनैवघृतादिहोमस्यतत्तत्फलप्रापकत्वात् ऐतरेयवाक्येपि
नवाय्वादिशुद्धिरूपोर्थः किन्तुहोतुर्विद्वत्ताप्रशंसनेनयज्ञस्यस्वस्वफ
लोत्पादकत्वंप्रतिपाद्यते भवतुक्तवाय्वादिशुद्धिफलकत्वेतुएतावत्ये
वविद्वत्तापेक्षितानाद्रव्यशुद्धिर्दृष्टतादिप्रक्षेपश्चयथासम्यक्स्यात् शतपथवा

कथमपि नास्माकं प्रतिकूलम् तत्र जायत इति पदात् अग्रे जलोत्पत्तिर
भिधीयत इति ज्ञायते नतु तत्र तस्य विद्यमानस्य शुद्धिरिति चिकित्साशा
स्त्रे पि चरकादिभिर्न घृतादिहोमेन वाय्वादिशुद्धिरुदिता प्रत्युत तिलादि
स्निग्धवस्तुधूमेन कासनेत्रपीडापित्ताधिक्यानि लोके दृश्यन्ते किञ्च
नहि सोमरसस्य बहुतो व्याधिनाशनः चिकित्साशास्त्रे शतपुष्पात्रिफला
बृहत्यादीनां बहूनां रोगहद्रव्याणां धूमेन वाय्वादिशोधकत्वं दृश्यते तेषां
निगमेन होमीयद्रव्यत्वं कुतो नोक्तम् तत्तत्कामनया तत्तद्देवताकत
त्तन्मन्त्रैस्तत्तत्संख्याक तत्तत्कालिक तत्तद्द्रव्यहोमविधानस्यापार्थकत्वं
तत्कुशकण्डिकान्वारम्भानन्वारम्भाकृतिपरिमाणमण्डपनिर्माणवेदिरचनयूप
स्थापनादीनां बह्वायासव्ययसाध्यानां हुतशेषघृतस्य प्रोक्षणीपात्रप्र
देपाप्रक्षेपयोश्चनैष्फल्यंच प्रत्यहश्रूयमाणतत्तद्देवताकतत्तत्काम
नासम्पादकतामपहाय श्रूयमाणवाय्वादिशोधनरूपचिकित्सार्थक
त्वकल्पनं तद्द्वारा सर्वजगत्सुखकृत्त्वेनेश्वरप्रसादात्स्वकामावाप्तिकल्प
नंच सर्वथानुचितमेव विष्ठाभस्माद्यशुद्धवस्तुसम्पृक्तधूमस्योत्पन्नान्नादि
नाजनानां सरोगतायाश्चादर्शनंच अपिच सुगन्धिद्रव्यहोमेनेतिन्यून
म् अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसम्भवन्तीत्यादि
छान्दोग्ये प्रपा ४ अक्षिपुरुषोपासकप्रशंसायां तस्य पाककर्माभावेपु
नमलोकप्रतिपत्तिप्रतिपादकश्रुतिदर्शनात् शवदाहाद्यन्त्येष्टिकर्मणो
पि वेदानुरोधित्वे न शवदाहोत्थधूमस्यापि भवन्मते वाय्वादिशोधकताया अ
वश्याभ्युपगन्तव्यत्वेन दुर्गन्धिद्रव्यस्यापि तच्छोधकत्वस्य भवतास्वीका
र्यत्वात् होमत्वसाम्यात्- ॥

यत्तु द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यादिति जैमिनि
सूत्रे अ·४ पा·३ सू·१ परार्थत्वादित्यस्य परोपकारायेत्यर्थः कल्पि
तस्तत्र- ॥

परार्थत्वादित्यस्य क्रियापा र्थत्वादित्यर्थस्य सर्वसम्मतत्वात् अतएव द्रव्या
णां तु क्रियार्थानां संस्कारः क्रतुधर्मः स्यादिति अ·४ पा·३ सू·८ सू

वैक्रियार्थानामिति निःस्पष्टमुक्तम् द्रव्यसंस्कारोऽङ्गं क्रतुरङ्गीति क्रतुधर्मः इ
त्यस्यार्थ इति दिक् - अन्नाद्ध्येव खल्विमानि भूतानि जायन्त इत्यादि भृगुवल्ली
स्थश्रुतिस्त्वन्नस्य जीवनहेतुत्वेन तत्प्रशंसार्था न तु होमेन वाय्वादिशुद्धिह
रान्नशुद्धिविधायिकेति सुधीभिर्विचार्य्यम् ॥

यत्तु प्रमाणनिरूपणावसरे दयानन्द आह कुम्भकर्णस्य योजनपर्यन्तं
श्मश्रुणः केशा ऊर्द्ध्वं स्थिता आसन् योजनचतुष्टयमूर्द्धनासिका चेति कथन
मसम्भवत्वान्मिथ्यैवास्तीति विज्ञापनमिति ॥

तन्न आप्तवाक्यप्रामाण्येनेश्वरस्य सर्वशक्तित्वस्वीकारेण सिन्धुजले वाडवाग्नि
स्थितिवत् निराधारभूमण्डलसूर्यादिमण्डलावस्थितिवच्चात्मन आका
शाद्युत्पत्तिवच्च चन्द्रमा मनसो जात इत्यादिवाक्याविरोधेन मनआदेश्चन्द्राद्यु
त्पत्तिवच्चेश्वरेच्छया तादृशकुम्भकर्णोत्पत्तेरपि सम्भवात् ईश्वरमायाया
अघटनघटनापटीयस्त्वात् अपदसर्पगतिवत् चक्षुःश्रवसामन्तराश्र
वांसि चक्षुर्भिर्दशोर्ध्वेन्द्रियव्यवहारोपलब्धिवत् हलाकायां रेतःसेकमन्त
रेणैव गर्भाधानोपलम्भवच्च सहस्राहरवीजान्महावृक्षवटोत्पत्तिवत् वा
ह्यवायुस्पर्शाभावेऽपि पृथिवीगर्भस्य सर्पादिप्राणिजीवनवच्च त्र्यम्बकं य
जामहे इति य॰ अ॰ मं॰ मन्त्रात्त्रिनेत्रसमर्थकात् इन्द्र वायू इत्यादिमन्त्रे
ऋ॰ अ॰ १ सू॰ २२ ऋ॰ १ शर्वाक्षे सहस्राक्षाधिपस्यतीति वचनात्सहस्रनेत्रताव
बोधकाच्च रुद्रकोपाग्निसम्भूतः सर्वभूतभयावहः त्रिपादस्त्रिप्रहर
णस्त्रिशिराः सुमहोदर इत्यादिस्मृतिवचसम्पत्तिर्नेत्रत्रिपात्त्रिशीर्षस
हस्रनेत्रव्यक्तिसम्भववद्वहिः सहस्राधिकादिमस्तिकेवच श्रुतिस्मृत्या
दिप्रमाणनिष्पन्न दशमुखचतुर्मुखषण्मुखपञ्चमुखसहस्रबाहु च
तुर्भुजाष्टभुजीव्यक्तिकामगविमानवच्च तादृग्व्यक्तिक कुम्भकर्णः
सम्भाव्यत एव देवमायया सर्वस्य सुकरत्वात् भवदृष्टस्त्वेवैव सम्भ
वित्वे निगमप्रगीतेन्द्रादिदेवतानां देवयोनीनां विद्याधरादीनां वेदस्मृति
प्रणीतानां चाभावापत्तेः द्विशत्यधिकशतवर्षायुषो मनुष्यस्य सम्भवेऽपि
द्विपरार्द्धमितब्रह्मायुष एकसप्ततिदिव्ययुगमितेन्द्रमन्वाद्यायुषश्चत्वपाः

स्वीकर्त्तव्यत्वाच्च अकृतश्मश्रुनरस्य हलचतुष्टयाधिकश्मश्रुदर्शनेपि द्वि
त्रयोनेरास्तकुम्भकर्णस्यतादृक्त्वेकिम्बाधकम् ईश्वरसृष्टेर्विलक्षणत्वात्
वैलक्षण्यंचैकजातिस्थप्यास्ति एकेनसदृशास्यद्वितीयस्यासत्त्वात् एवंच
त्यजब्रह्मणस्तावद्दिनप्रमाणंमदनुरोधेनचतावत्तदायुःप्रमाणंवेदाभ्यनि
णानेऽङ्गीकृतंशृङ्गवाक्यप्रमाणयेनदेवदैत्यादिसृष्टिंतदाकार्याजि
नन्वनाहम्ब्रह्मयोनेर्विदुषोमनुष्यस्यतावद्दिनप्रमाणमभ्युपैमि किन्तु
ब्रह्मपदाभिधेयस्यपरमात्मनोदिनत्वेनसृष्टिप्रादुर्भावसमयंरात्रितया
चतन्निरोभावंतत्कालपरिच्छेदायाभिदधएवंमन्वन्तराणामपीतिचेन्मै
वम्वद- ॥
श्रुतिस्मृतिपुराणविरुद्धत्वात् एवंहिश्रूयतेमुण्डकोपनिषदि ब्रह्मादेवा
नाम्प्रथमःसम्बभूवविश्वस्यकर्त्ताभुवनस्यगोप्ता- सब्रह्मविद्यांसर्वविद्याप्र
तिष्ठामथर्वायज्येष्ठपुत्रायप्राहेत्युपक्रम्याथर्वणेयांप्रवदेतेत्यादिसार्द्धम
न्त्रेणब्रह्मविद्यासम्प्रदायमभिधायार्द्धेनकस्मिन्नुभगवद्दत्यादिनाशौन
कीयप्रश्नस्वरूपमुक्त्वातस्मैसहोवाचेत्यादिमन्त्रद्वयेनाङ्गिरसाकर्मोपा
सनाविधायिकांसाङ्गवेदविद्यामपराख्याम्परब्रह्मबोधिकांपराविद्यांवे
द्यतयोपन्यस्यपरब्रह्मस्वरूपंयत्तदद्रेश्यमग्राह्यमगोत्रमित्यादिमन्त्रेणा
भिधाययथोर्णनाभिरित्यादिमन्त्रत्रयेणाभिन्ननिमित्तोपादानाद्ब्रह्मणः
क्रमेणजगदुत्पत्तिरित्यभिहिता ततउभयविद्याविषययोःसांसारिकभोग
मोक्षयोर्मध्यादपरविद्याविषयंहातव्यत्वेनाभिसन्धायतदेतत्सत्यंमन्त्रे
षुकर्माणिकवयोयान्यपश्यन्नित्यादिमन्त्रचतुष्केणाग्निहोत्रादिरूपाणि
न्नलोकादिसाधिकामपरविद्याममिधायएतेषुयश्चरतेभ्राजमानेषुयथा
कालञ्चाहुतयोह्याददायन्- तन्नयन्त्येताःसूर्य्यस्यरश्मयोयत्रदेवानाम्प
तिरेकोधिवासः मु- खं- २ मं- ५ आददायन् आददानाआहुतयोनि
र्वर्त्तिताएताःसूर्यस्यरश्मयोभूत्वातंतत्रनयन्तियत्रस्वर्गे स्वर्गेलोकेनभ
यंकिञ्चनास्तिनतत्रत्वंनजरयाबिभेति उभेतीर्त्वाऽशनायापिपासेशोका
तिगोमोदतेस्वर्गलोके कठ- वल्ली- १ मं- १२ इत्युक्तलक्षणेदेवाना

हेमन्त्योत्व
तत्रनभ
वति = २

ष्यतिनिन्द्राकः सर्वांस्तुपर्यधिवसतीत्यधिवासः शेषंस्पष्टम् अनेनमन्त्रेणेन्द्र
लोकप्राप्तिमुक्ताएह्येहीतिमन्त्रेणानमेवप्रपञ्च्य - ॥

प्लवाह्येते अदृढायज्ञरूपा अष्टादशोक्तमवरंयेषुकर्म्म - ए
तच्छ्रेयोयेभिनन्दन्तिमूढाजरामृत्युंपुनरेवापियन्ति ७ अ
विद्यायामन्तरेवर्त्तमानाः स्वयंधीराः पण्डितम्मन्यमानाः जङ्घ
न्यमानाः परियन्तिमूढा अन्धेनैवनीयमानायथान्धाः ८

अनेनमन्त्रयुगलेनाग्निमाभ्यासनत्कर्मविनिन्द्य - ॥

तपः श्रद्धेयेह्युपवसन्त्यरण्येशान्ताविद्वांसोभैक्षचर्य्यांचरन्तः -
सूर्य्यद्वारेणतेविरजाः प्रयान्तियत्रामृतः सपुरुषोह्यव्ययात्मा
खं॰ २ मं ११ ॥

अस्यार्थः येपुनः सगुणब्रह्मज्ञानिनः पूर्वोक्तविपरीतावानप्रस्थाः संन्यासि
नश्च तपःश्रद्धेहितपः स्वाश्रमविहितंकर्म श्रद्धाहिरण्यगर्भादिविषयावि
द्यातेउपवसन्तिसेवन्तेअरण्येवर्त्तमानाः शान्ताउपरतकरणग्रामाः विद्वांसो
गृहस्थाश्चज्ञानप्रधानाइत्यर्थः भैक्षचर्यांचरन्तः परिग्रहाभावात्सूर्यद्वा
रेणसूर्योपलक्षितेनोत्तरायणेनपथाविरजाः विरजसः क्षीणपुण्यपापकर्मा
णः सन्तः प्रयान्तियत्रसत्यलोकादावमृतः सपुरुषः प्रथमजोहिरण्यगर्भो
हिअव्ययात्माअव्ययस्वभावोयावत्संसारस्थायीविरजस्त्वमापेक्षिकम् स
मस्तमपरविद्याकार्यंक्रियाकारकफलभेदभिन्नंद्वैतमेतावद्धिरण्यगर्भप्राप्त्यव
सानम् एतदन्ताएवसंसारगतयोऽपरविद्यागम्याः तथाचमनुः अ १२
ब्रह्माविश्वसृजोधर्मोमहानव्यक्तमेवच - उत्तमांसात्त्विकीमेतांगतिमाहु
र्मनीषिणइति ब्रह्माचतुर्मुखः विश्वसृजोमरीच्यादयः प्रजापतयः ध
र्मोयमः महान्सूत्रात्मा अव्यक्तंत्रिगुणात्मिकाप्रकृतिः गतिंसंसारगतिम्
अनुक्रमतामितिशेषः शतञ्चैकाहृदयस्यनाड्यस्तासांमूर्द्धानमभिनिः
सृतैका - तयोर्ध्वमायन्नमृतत्वमेतिविष्वङ्ङन्याउत्क्रमणेभवन्तीतिमन्त्रे
कठ॰ वल्ली॰ ६ मं॰ १६ प्रकृतोत्कृष्टब्रह्मविदोविद्याफलस्तुतयेसगुण
ब्रह्मविदांब्रह्मलोकभाजांगतिविशेषउच्यते अमृतत्वमापेक्षिकमत्र आभू

## दयानन्दमतमर्दनम्.

संप्लवं स्थानममृतत्वं हि भाष्यत इति स्मृतेः कालान्तरेण ब्रह्मणा वा सहतु
ल्यममृतत्वमेतीति वार्थः ब्रह्मलोकप्राप्तिस्तु देशादिपरिच्छिन्नं फलमतो ना
यं मोक्षः किन्तु क्रममुक्तिरिति यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति कठ० सर्वगं सर्वतः प्राप्य धीरा
युक्तात्मानः सर्वमेवाविशन्तीति न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीय
न्त इत्याद्याः श्रुतयो ह ज्ञानिनामिहैव सर्वकामप्रविलये सर्वात्मभावं प्रद
र्शयन्ति यतः अनेन तपः श्रद्धे य इति मन्त्रेण ब्रह्मलोकप्राप्तिरूपं द्विती
यमपरविद्याविषयमुपन्यस्य ब्रह्मलोकान्तात् संसाराद्विरक्तस्य परविद्या
यामधिकारप्रदर्शनायेमौ मन्त्रौ समाम्नायेते — ॥

परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृ
तेन — तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्र
ह्मनिष्ठम् १२ तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ता
य शमान्विताय — येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्म
विद्याम् १३ ॥

आभ्यां ब्रह्मलोकस्यापि महाप्रलये क्षयिष्णोः प्राप्तिं विगर्ह्य निर्गुणब्रह्म
प्रापिकाया विद्यायास्तदेतत्सत्यमित्यादिनोत्तरग्रन्थेन निरूपणम् अ
त्रेदं विमृश्यम् यदि द्विपरार्द्धमितवर्षावस्थायी चतुर्मुखो न भवेत् दाक
र्षपत्रामृतः स पुरुषो ह्यव्ययात्मेति वदेत् कथं वा एकसप्ततिदिव्ययुग
मितकालावध्यवस्थायित्वाभावे यत्र देवानां पतिरेकोऽधिवास इति वाक्ये
नेन्द्रस्य स्वर्गलोके वस्थानं वदेत् कथं वा यावदधिकारमवस्थितिराधिका
रिकाणामिति व्यासः सूत्रयेत् मैत्रेयशाखायां तस्यास्य प्रोक्ताऽग्न्यास्त
न वो ब्रह्मा रुद्रो विष्णुरित्युपक्रम्य स वा एष एकस्त्रिधाभूत इत्युपसंहारात्
कथं ब्रह्मण इतरविद्वन्मनुष्यसमत्वमेवेति न च तत्रेन्द्रब्रह्मादिपदानामीश्व
रवाचकत्वेन यात्र ब्रह्म एव लोक इति ब्रह्मलोकपदार्थ इति भ्रमितव्यम्
ईश्वरप्राप्तेरेव परमपुरुषार्थत्वेन सर्वाह्येन इति परीक्ष्येतीन्द्रब्रह्मलोकभोगयोः
क्षयशालिनोर्निन्दाया निर्गुणब्रह्मनिष्पप्रकाशाया अनुपपन्नत्वात् ईश्वरा

त्तिलयाक्रमेणावनीसंसारगतिः प्रवृत्तिलक्षणा प्रतिपादिता ॥
श्रीव्यासोपि सूत्रयति अतो विपर्ययेणात्तु क्रमोऽस्य उपपद्यते च अस्मा
त्सृष्टिक्रमवैपरीत्येन लयक्रमः मृद्घटस्येवोपपद्यत इत्यर्थः सांसारिक
दुःखानुभवाभावेन तु मुक्तिवत्प्रकृतिलयस्य पुरुषार्थत्वमानत्वाप्युपप
द्यते फलं च कर्मोपासनदेव प्रकृत्युपासनेऽपि परमेश्वर एव ददाति प्रकृतेर्जड
त्वात्फलदातृत्वानुपपत्तेर्नोपास्यत्वानुपपत्तिरिति अपि बोध्यम् ।
एतेन यत्कैश्चिद्वेदार्थानभिज्ञैः प्रच्छन्ननास्तिकैर्मूर्त्याद्यालम्बनात्मके श्व
रपूजननिषेधबद्धपरिकरैर्वेदादिप्रमाणसिद्धमूर्त्यालम्बनपूजानिषे
धजनितप्रत्यवायमलीमसान्तःकरणैः शिष्यजनगर्हणानिरस्तसम
स्तसुकृतैरन्धन्तमः प्रविशन्तीति मन्त्रस्यासम्भूतिपदस्य मायां जगत्
कारणं वाउत्पत्तिरहितं देवान् इत्यर्थः सम्भूतिपदस्योत्पत्तिमत्पदार्थवा
चकतां कल्पयित्वा पञ्चम्यां मूर्त्यालम्बनपूजानिषेधाभिधायकत्वमुच्य
ते तद्विद्वद्बुद्धिविध्वंसनहेतुकमेव ॥
मन्त्रस्य तरणिनरकालिकामूलाशनाभिधायि मार्गद्वारयाज्ञानिरूपको
त्तरमन्त्रविरोधात् लोकः पच्यमानश्चतुर्भिर्द्वारैर्ब्राह्मणमुनन्तपन्थेप
दोनन्द्वेज्यायादयथावेलिशतपथब्राह्मणस्य श्रुतिविरोधाच्च अवैचे
त्यस्य प्रतिमेत्यर्थः अर्चनेस्थापितिनिराधारेश्च इ॰ नात्रपूजार्थोवो
पदस्योज्ज्यर्थेऽवमेलोन कल्प्यापत्ते किन्तु तेयथावथोपासनेन देवभक्ती
निशादिकभाष्यस्य श्रुतिः एतत्सोमस्य सूर्यस्य सर्वलिङ्गं स्थापयति पाणि
मन्त्रं पवित्रमिति तैत्तिरीयोपनिषदि लिङ्गस्थापनप्रतिपादिका च अथातो वै
न्नमेदेवतानां पूरुषविधाः स्तुतिन्यादिनिरुक्तम् अपर इत्युच्यते नवेदनि
व्यानिशिवः स्कन्दो विशाखइति किंकारणम् मौर्यैर्हिरण्यार्थिभिरर्चाः प्रक
ल्पिता तत्वेतासु न स्यात् यास्त्वेताः सम्प्रतिपूजार्थास्तासु भविष्यतीति जीवि
कार्थे चापण्ये अ॰ ५ पा॰ ९९ सू॰ इति सूत्रस्य भाष्यञ्च अपः परिषिञ्चति
रुद्रस्यान्तर्हित्यैदति यजुर्वेदीयहिरण्यकेशीयगृह्यसूत्रस्य पाषाणमतिमर एवप
विग्रहेषु तत्पुनर्भोगकरी शुभ्रकीर्तिनादिकासा सर्वेदप्ये त्रायणी यथा वस्त्रा

तैः सहाग्निरुत्पन्नो योमुखतः पश्यतीति देवस्तत्ब्रह्मपश्यति ६ सर्वैदेवताभि
काया प्राणेन हिरण्यगर्भरूपेणपरब्रह्मणः सम्भवति अदितिः शब्दादीना
मदनात्याभूतैः समन्विता उत्पन्ना एतद्वैतद्ब्रह्मप्रकृतम् ७ आभ्यांब्रह्म
णः परमात्मोद्भूतत्वं परात्मरूपत्वंचोच्यते सएवस्वयमण्डभावितितस्मिन्नण्डे
स्वयम्ब्रह्मासर्वलोकपितामहइति मनु० अ० १ वाक्ययोर्मनुनास्वयम्पद
स्योपादानात्स्पष्टमुपलभ्यतेहिरण्यगर्भरूपतयास्वयमेवेश्वरः प्रादुरभव
त् ततस्तेनैवतस्मिन्नण्डेसभगवानित्युपक्रम्येनदन्तास्तुगतयोब्रह्माद्याः
समुदाहृताइत्यन्तेनग्रन्थेनमन्वन्तर्गतेनोत्पादितानृषींश्चतत्रलयमभ्यधा
त् द्विधाकृत्वात्मनोदेहमर्द्धेनपुरुषोभवत् अर्द्धेननारीतस्यांसविराजमसृज
त्प्रभुः ३५ श्लो० ततोविराडजायतेतिमन्त्रःसलोकानांतुविवृद्ध्यर्थंमुखबाहूरु
पादतः ब्राह्मणंक्षत्रियंवैश्यंशूद्रंचनिरवर्तयत् ३४ ऊर्द्ध्वंनाभेर्मेध्यतरः पुरुषः
परिकीर्तितः तस्मान्मेध्यतरन्त्वस्यमुखमुक्तंस्वयम्भुवा- उत्तमाङ्गोद्भवाज्ज्यैष्ठ्या
द्ब्रह्मणश्चैवधारणात् सर्वस्यैवास्यसर्गस्यधर्मतोब्राह्मणः प्रभुः तंहिस्वयम्भूः
स्वादास्यात्तपस्तप्त्वादितोसृजत्इतिसर्वस्यास्यतुसर्गस्यगुप्त्यर्थंसमहाद्युतिः
मुखबाहूरुपज्जानांपृथक्कर्माण्यकल्पयदिति म० अ० १ यदासदेवोजागर्त्ति
तदेदंचेष्टतेजगत् यदास्वपितिशान्तात्मातदासर्वंनिमीलति म० अ० १ म
नुप्रणीतैतद्वाक्यपर्यालोचनयोपक्रमोपसंहारादिलिङ्गद्वाराचतुर्मुखस्यैवत
दहोयद्ब्रह्मपदवाच्यंनतुपरात्मनस्तस्याकायत्वेनदेहद्विधाकरणेक्तैरयुक्त
त्वात् मुखाद्युत्पत्त्यनुपपत्तेश्च नस्मात्स्वयोनेरेवाङ्गेभ्योब्राह्मणादिवर्णो
त्पत्तिः- ॥

एतेनब्राह्मणोस्यमुखमासीदितिमन्त्रव्याख्यायांयद्दयानन्दोवक्यति उत्त
मबलमध्यमनीचगुणेभ्यऐश्वरेभ्योवर्णानामुत्पत्तिरिति तदपिनिरस्तम्-
ईश्वरेमध्यमाधमगुणारोपणस्यनिर्मूलत्वाच्च उत्तमाङ्गोद्भवादिपदे
मुखादेरभ्यसनाच्चेतिदिक् किञ्चनकेवलंब्रह्मणएवतावदायुर्यमस्य
याम्यपदेवर्त्तमानस्याप्याकल्पावस्थानंयमपुरेभवति सथाहियमवच
नसरूपाश्रुतिः प्रयतामनिष्टकारिणांयमवएयनांदर्शयति- ॥

नसाम्परायः प्रतिभातिबालंप्रमाद्यन्तंवित्तमोहेनमूढम् अयंलोको नास्तिपरइतिमानीपुनःपुनर्वशमापद्यतेमेइति कठ. व. २ मं. ६ भगवान्बादरायणोपिसूत्रयामास संयमनेत्वनुभूयेतरेषामारोहाव रोहौतद्गतिदर्शनात् अ. पा. सू. ॥

अस्यार्थः तुशब्दःपूर्वपक्षंव्यावर्त्तयति नैतदस्तिसर्वेचन्द्रमसङ्गच्छन्तीति भोगा यहिचन्द्रारोहणंननिष्प्रयोजनम् नापिप्रत्यवरोहायैव यथाकश्चिद्वृक्षमारो हतिपुष्पफलोपादानायननिष्प्रयोजनंनापिपतनायैवभोगश्चानिष्टादिकारि णांचन्द्रलोकेनास्तीत्युक्तम् तस्मादिष्टादिकारिणएवचन्द्रलोकमारोहन्तिने तरेइतितेतुसंयमनंयमालयमधिरुह्यस्वदुष्कृतानुरूपायामीर्यातनाअनुभू यपुनरेवास्मिंलोकंप्रत्यवरोहन्तीत्येवम्भूतावारोहावरोहौभवतः कुतस्तद्गति दर्शनात् नसाम्परायइत्यादिपूर्वोक्तश्रुतिषु.

स्मरन्तिच अ. पा. सू. ॥

अपिचमनुव्यासप्रभृतयःशिष्टाःसंयमनेपुरेयमायत्तंकुत्सितकर्म्मविपाकंस्म रन्तिनाचिकेतोपाख्यानादिषु अन्यत्सूत्रम्. ॥

अपिच सप्त अ. पा. सू. ॥

सप्तनरकारौरवप्रमुखादुष्कृतफलोपभोगभूमित्वेनस्मर्य्यन्तेपौराणिकैः ता ननिष्टादिकारिणःप्राप्नुवन्तिकुतस्तेचन्द्रंप्राप्नुयुरित्यभिप्रायः ननुविरुद्धमि दंयमायत्तायातनाःपापकर्माणोनुभवन्तीतियतस्तेषुरौरवादिष्वन्येचित्रगु प्तादयोधिष्ठातारःस्मर्य्यन्तेइतिचेन्न यतःसएवसूत्रयति. ॥

तत्रापिचतद्व्यापारादविरोधः अ. पा. सू.

तेष्वपिसप्तसुनरकेषुतस्यैवयमस्याधिष्ठातृत्वव्यापाराभ्युपगमादविरोधः य मप्रयुक्ताएवहितेचित्रगुप्तादयोप्यधिष्ठातारःस्मर्य्यन्तइति. ॥

यमकृतप्रतिपादकोमन्त्रोऋग्वेदे. उरूणसावसुतृपाउदुम्बलौय मस्यदूतौचरतोजनाननु. तावस्मभ्यंदृशयेसूर्य्यायपुनर्दातामसु मद्येहभद्रम् १२ यौतेश्वानौयमरक्षितारौचित्यादिच ११ अष्ट. ७ अध्या. ६ मं १० सू १४ निष्पापयमिच्छूदृशोत्यादिःपूर्वोक्तश्चअष्ट.१

अध्याय. २ सू. ॥

मनुरप्याह पञ्चभ्य एव मात्राभ्यः प्रेत्य दुष्कृतिनां नृणाम् शरीरं यातनार्थीयम
न्यदुत्पद्यते ध्रुवम् म॰ अ॰ १२ श्लो॰ १६ तेनानुभूय ता यामीः शरीरेणेह यातनाः
तास्वेव भूतमात्रासु प्रलीयन्ते विभागशः १७ यद्याचरति धर्मं स प्रायशोऽधर्म
मल्पशः तैरेव चावृतो भूतैः स्वर्गे सुखमुपाश्नुते म॰ अ॰ १२ श्लो॰ २० यदि
तु प्रायशोऽधर्मं सेवते धर्ममल्पशः तैर्भूतैः स परित्यक्तो यामीः प्राप्नोति यातनाः २१
यामीस्ता यातनाः प्राप्य स जीवो वीतकल्मषः तान्येव पञ्चभूतानि पुनरप्येति भा
गशः २२ तामिस्रादिषु चोग्रेषु नरकेषु विवर्त्तनम् असिपत्रवनादीनि बन्धन
च्छेदनानि चेत्यादि म॰ अ॰ १२ श्लो॰ ७४ अत्रेदं विचार्य्यम् यदि यमस्य ना
कल्पावस्थायिता न तदा कथं पुनः पुनर्वशमापद्यते मद्गतिं यमवचने सम्भाव्ये
न तस्याल्पकालावस्थायित्वे चक्रवत्सम्बन्धप्रयोगस्यानर्थक्यात् न तावद्य
मशब्द ईश्वरवाचकोऽस्तीति वक्तव्यम् ॥

वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् । तस्यैतां शान्तिं कु
र्वन्ति हर वैवस्वतोदकमिति क॰ व॰ १ आशाप्रतीक्षे सङ्गतं सू
नृताञ्चेष्टापूर्ते पुत्रपशूंश्च सर्वान् । एतद्वृङ्क्ते पुरुषस्याल्पमे
धसो यस्यानश्नन्वसति ब्राह्मणो गृहे । ८ तिस्रो रात्रीर्यदवात्सीर्गृ
हे मेऽनश्नन्ब्रह्मन्नतिथिर्नमस्यः नमस्तेऽस्तु ब्रह्मन्स्वस्ति मेऽस्तु तस्मा
त्प्रति त्रीन्वरान्वृणीष्व ९ ॥

(हाशिये पर टिप्पणी: विनाशयति = १६)

तत्रत्यानामासां श्रुतीनां यमनचिकेतआदिवचनस्वरूपाणां पर्य्यालोचनेन श्रु
तिशरीरे गृहभार्यादिमत्तायाः पाद्यार्घ्यादिप्रदानविषयिकात्रशाहेतायाः
प्रणीतिस्वं कस्वारीः प्रार्थनायाः नचिकेतसा सह वदनस्य वन्दनादिव्यवहा
रस्य चासम्भवत्वात् परमेश्वरो न हृदयआकाशस्थ इति दहरविद्या
पास्य हार्दपरमेश्वरस्य परमकारुण्यस्य सर्वस्य वशी सर्वेशानः सर्वस्याधिपतिः स न सा
धुकर्म्मणा भूयान्नो एवासाधुना कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भू
तपाल एष सेतुर्विधरण एषां लोकानामसम्भेदायेति बृहदारण्यकश्रुतेः
स्वपरताधिकारकानिवासकत्वेन ब्राह्मणोपेक्षारूपासाधुकर्मणा नस्य

कनीयस्त्वाभावाच्च एतेन गोपगोपीरूपेणावतीर्णाभिर्देववेदाङ्गनाभिः प
रात्मरूपाभिः सह सकलजगदुद्दिधीर्षयावतीर्णस्यात्मक्रीडस्यात्मरतेः श्री
कृष्णस्य रासादिलीलाः स्मर्तृजनपावनत्वमादिविनिन्दनो मूर्खा उपेत्याः एव-
यत्तु होमसमये वैदिकमन्त्रपाठः किमर्थमित्याशङ्क्योत्तरयति यथाहस्तेन
होमो नेत्रेण दर्शनं त्वचा स्पर्शस्तथा वाचा मन्त्रपाठः होमेन किं फलं भवती
त्यस्य ज्ञानम् मन्त्राणां पुनः पुनरुच्चारणेन कण्ठस्थकरणम् ईश्वराज्ञित
बुद्धिश्चेश्वरस्तुतिप्रार्थनोपासनाश्च क्रियन्ते सर्वकर्मादावीश्वरप्रार्थनाका
र्यैत्युपदेशश्चेति- ॥

तन्मन्दम् वाय्वादिशुद्धिफलकत्वे त्वहस्तेन स्वभृत्यचाण्डालादिहस्तेन वा होमे दर्श
नस्पर्शनेन्त्रा राव किं हवनोत्थधूमो वाय्वादिन शोधयिष्यति अदृष्टात्यह
स्तकृतभोजनजतृप्तिवत् नादृशाविषभक्षणजमृतिवच्च वह्नेस्तद्द्रव्यदाह
कत्वेन मन्त्रपाठं विनापि तद्द्रव्यपरमाणूनां वायुसंयोगेन तच्छोधकत्वस्यस
म्भवात् नहि होमसमय एव मन्त्राणां घोषणं ईश्वरस्मरणादेः सर्वदैवक
र्तव्यत्वेन तस्मिन्काले ऽकरणेपि प्रार्थनां विनापि होमस्य तच्छोधकत्वसम्भ
वे तस्मिन्नेहस्मिन् तदुपयोगाभावात् मनुरपि होमस्य तुष्करत्वमाह नैवक
न्या न युवतिर्नाल्पविद्यो न बालिशः होता स्यादग्निहोत्रस्य नार्त्तो नासंस्कृतस्त
था म॰ अ॰ ११ श्लो॰ ३५ नरकं हि पतन्त्येते जुह्वतः स च यस्य तत् तस्मा
द्वैतानकुशलो होता स्याद्वेदपारगः इति॰ श्लो॰ ३६ ॥

यत्तु वदति त्वमेको ह्यस्य सर्वस्य विधानस्य स्वयम्भुव इत्यादिश्लोकत्रयं मनु
वचनमिति तन्न- ॥

मनुं प्रति महर्षिवाक्यानीमानि यतः मनुस्मृतौ प्रथमेध्याये द्रष्टव्यम्-
यत्तु गर्ते होमे कृते ग्रेस्त्री ब्रत्वा द्रव्यं सद्यो विभेदं प्राप्याकाशं गच्छति वेदिद्द
ष्टान्तेन त्रिकोणाद्याकारकरणेन रेखागणितं साध्यते तत्रेष्टकापरिगण
नेन गणितविद्यापि गृह्यते एवमेवोत्तरेपि पदार्थाः सप्रयोजना एवेति
परन्त्वेवं प्रणीतायां रक्षितायां पुण्यं स्यादेवं पापमिति यदुच्यते तत्र पापनि
मित्ताभावात्ताकल्पनामिथ्यैवास्ति तस्माद्यद्युक्तिसिद्धं तद्ग्राह्यं येन विना

यज्ञासिद्धिरिति- ॥

तन्न वेदाङ्गतयाज्योतिर्विद्याप्रतिपादनस्यैवैयर्थ्यापत्तेः वेदेनैव तज्ज्ञापनात् अ
न्यथान्येषामपि शिक्षाद्यङ्गानां वेदबोध्यत्वापत्तेः पाटीगणितबीजगणितरेखा
गणितादिबोधकानामनुशासनानां तत्रानुपलभ्यमानत्वाच्च वेदिविधायक
वाक्यस्य रेखागणितोदाहरणत्वे विधौ तात्पर्याभावेन वेदिं विनापि होमे वाय्वा
दिशुद्धेः सम्भवाच्च स्वर्गकामो यजेतेत्यत्र स्वर्गकाम इत्यत्र प्रथमाविभक्तिवि
शिष्टरूपोदाहरणप्रदर्शनाभ्युपगमे न यजेतेत्यत्र यजधातुलिङ्लकारोदा
हरणत्वाङ्गीकारेण च स्वार्थे यज्ञकरणविधौ तात्पर्याभावस्यापि प्रतिपाद
यितुं शक्यत्वेन भवदुक्तवाय्वादिशुद्धिप्रतिपादकत्वस्याप्यसम्भवाच्च तत्र
त्यैतत्सूक्तभाष्यार्थे यदुक्तं पिपीलिकादीनामग्निप्रवेशनिराकरणाय कुशपरि
स्तरणं तन्निर्युक्तिकम् सर्वाभिमुखकुशपरिस्तरणेन पिपीलिकादिनिर्गम
प्रवेशनिरोधासम्भवात् यतः कुशानामधस्तादुपरिष्टादपि पिपीलिका
दय आगच्छन्तो निर्गच्छन्तश्च दृश्यन्ते तस्माददृष्टार्थमेव कुशपरिस्तर
णादिविधानं वेदे स्वर्गाद्यर्थमेवाग्निहोत्रादिविधाने- सन्निहितस्वर्गका
मपदलभ्यस्वर्गार्थत्वमपहायानुक्तवाय्वादिशुद्धिप्रतिपादकत्वकल्पनं
सर्वथानुचितमेव प्रणीतादिविन्यासवैपरीत्यावैपरीत्ययोर्दोषप्रतिपाद
कवाक्ये पापनिमित्तालोचनायां तु वेदकर्त्रोक्तोल्लङ्घनस्यैवानिष्टोत्पादक
त्वेन तत्त्वं कल्पनीयम् सकलवेदं प्रमाणत्वेन स्वीकुर्वतस्तव सयुक्तिको वेदः
प्रमाणमयुक्तिको मिथ्येति कथनात् स्वग्रन्थविरोधोपि सम्पद्यते त्यक्तत्वयाधु
नास्मृत्यादिवच्छन्दसोपि प्रामाण्यम्- ॥

एवं प्रणीतायां रक्षितायां पुण्यं स्यादिति यदुक्तम् ॥

तदशुद्धम् रक्षिताशब्दस्यास्यापि तादर्थ्ये प्रयोगस्य व्याकरणादिविरुद्धत्वात्
शिष्टाप्रयुक्तत्वाच्चेतिदिक्- ॥

यच्चाग्निर्देवता वातो देवतेति मन्त्रे देवताशब्देन वेदमन्त्राणां ग्रहणं तेषां कर्मका
ण्डादिविधेर्द्योतकत्वात् गायत्र्यादिछन्दांसि ह्यग्न्यादिदेवताख्यानि यस्मि
न्मन्त्रेग्निशब्दार्थप्रतिपादनं वर्त्तते स एव मन्त्रोऽग्निदेवतो गृह्यते तेषामपि तत्तदर्थ

स्पष्टोनकत्वादीश्वरकृतसङ्केतत्वाच्चेति॰ ॥

तदुच्छम् लिङ्गोपदेशश्चतदर्थवदितिजैमिनीयसूत्रविरोधात् तदर्थस्तु अग्निमीळइत्यस्यव्याख्यायांदृष्टव्यः अग्निंदूतमितिमन्त्रस्यैवाग्निदेवतात्वेसास्यदेवतेतिपाणिनिसूत्रनिष्पन्नात्वाग्नेय्याग्नीध्रमुपतिष्ठेतेत्यादौदेवतार्थकतद्धितप्रत्ययान्ताग्नेयीत्यादिपदानिविरुद्ध्येरन् मन्त्रतद्देवतयोःप्रतिपाद्यप्रतिपादकसम्बन्धाभावेनप्रत्ययानुत्पत्तेः ॥

यत्त्वग्निदेवतइत्युक्तम्॰ ॥

तत्तदर्थं स्पृहम्॰ ॥

देवताशब्दस्यनियतस्त्रीलिङ्गत्वेनबहुव्रीहिसमासंविनाग्निदेवतइत्यस्यमन्त्रविशेषणस्यानुपपन्नत्वेनबहुव्रीहौचतदभिप्रेतस्याग्निदेवताभितोमन्त्रइत्यर्थस्यानवगतेरिति॰ ॥

यत्तु अथातोदैवततद्यानिनामानिप्राधान्यस्तुतीनांदेवतानांतद्दैवतमित्याचक्षते सैषादेवतोपपरीक्षा यत्कामऋषिर्यस्यांदेवतायामार्थपत्यमिच्छन्स्तुतिंप्रयुङ्क्तेतद्दैवतःसमन्त्रोभवति तास्त्रिविधाऋचःप्रत्यक्षकृताःपरोक्षकृताआध्यात्मिक्यश्च नि॰ अ॰७ खं॰१ तिनिरुक्तस्यकल्पितार्थप्रमाणयति॰ ॥

तद्भ्रान्तिमूलकम् मन्त्रस्तुत्यायादेवतायाः स्पष्टंमन्त्रेणोभिन्नत्वेनाप्रतीयमानत्वात् कथमन्यथाप्राधान्यस्तुतीनांदेवतानामितियस्यांदेवतायामार्थपत्यमिच्छन्स्तुतिंप्रयुङ्क्तइतिच तद्दैवतःसमन्त्रइतिचनिरुक्तकारोवदेत्स्तुतिस्तुत्ययोर्भेदात्॰ ॥

यद्दयानन्द॰ तथैवानादिष्टदेवतामन्त्रास्तेषुदेवतोपपरीक्षायद्दैवतःसयज्ञोयज्ञाङ्गंवातद्देवताभवन्त्यथान्यत्रयज्ञात्प्राजापत्याइतियाज्ञिकानाराशंसाइतिनैरुक्ता अपिवासाकामदेवतास्यात्प्रायोदेवतावास्तिह्याचारोबहुललोकेदेवदेवत्यमतिथिदेवत्यंपितृदेवत्यंयाज्ञदेवतोमन्त्रइति नि॰ अ॰७ खं॰४ निरुक्तस्योक्तार्थेप्रमाणत्वेनोपनिबध्नाति॰ ॥

तदपिनास्माकंप्रतिकूलम्॰ ॥

तदीयव्याख्यानन्तु यत्र न देवता दर्शनेनाभार्थो वा येषु न दृश्यते तत्र यज्ञो
देवता यज्ञाङ्गं वेत्येतद्देवताख्यमिति विज्ञायते ॥

तन्नुच्छम् यद्देवतः स यज्ञ इति निरुक्तस्य यद्देवताकः स यज्ञ इत्यर्थः
यस्या देवताया अर्च्चादि तस्मिन्यज्ञे यज्ञाङ्गे वा भवति तद्देवताकास्तेम
न्त्रा इति स्पष्टमुपलभ्यमानत्वात् अहो बुद्धिबलं पण्डितमन्यस्य यतः सु
बोधमपि दुर्बोधन्तस्य अनादिष्टदेवता इत्यस्यार्थं च देवतादर्शनेनेति
नार्थः दिशेरुच्चारणार्थत्वेनानुच्चारितदेवताका मन्त्रा इत्यर्थस्यैवत
स्य साधुत्वात् तत्कथं यज्ञादन्यत्र प्राजापत्यादित्यत्रापि मन्त्रस्यैवेश्वरस्तूयते
कुतो न ईश्वरस्यापि तत्र प्रत्यक्षतो ऽप्रतीयमानत्वात् वस्तुतस्तु यत्र
देवतोच्चारणं न तत्र ब्रह्मैव देवता प्रजापतिशब्दस्य चतुर्मुखे प्रसिद्धत्वात्-
देवदेवत्यमिति निरुक्तस्यैव दैवत्यमिति पितृदेवत्यमित्यस्य मात्
पितृदेवत्यमिति व्याख्यानन्तु मूढप्रलापः ॥

मृतानां षट्पितॄणां सपत्नीकानां पितृशब्देनोपादेयत्वान्मातुर्मृतायाः
पृथग्ग्रहणस्यानर्थकत्वात् ये समानाः समनस इत्यादिश्च बहुषु मन्त्रेषु
मृतषट्पितॄणामेव श्राद्धदेवतात्वेनाभिधानात् तत्तन्मन्त्रविधानादि
दिव्यपितॄणामावाहनपूजनादेः श्राद्धे विधानात् आयन्तु नः पितर इत्या
दिमन्त्रैरिति देवशब्दस्य विद्वदर्थकत्वाभावस्य सर्वमस्माभिरुपपादितत्वेने
न्द्रादिदेवतावाचकत्वाच्चेति ॥

मन्त्रास्तु यज्ञसिद्धये ऽपेक्षितमुख्यहेतुत्वाद्यज्ञदेवता एव सन्तीति निश्ची
यत इति ॥

यत्तदसमञ्जसम् यजनीयस्य देवस्याग्न्यादेः सम्प्रदानत्वेन प्रसाद्यत्वेन फ
लप्रदत्वेन च मुख्यत्वात् मन्त्राणां स्तुतिरूपत्वेनाचेतनत्वेन च स्तुत्याया
तनायाग्न्यादेरेव देवतायाः प्रसादसाधनत्वात् ॥

एतेन मन्त्रा ईश्वरात्तानरायज्ञो यज्ञाङ्गं प्रजापतिः परमेश्वरः कामो विद्वान्
अतिथिर्माता पिता चार्य्यश्चेति कर्मकाण्डादीन्यत्येता देवताः सन्तीति
परिगणनम् मन्त्रेश्वरादेव यात्तद्देवता भवतु इति ॥

परास्तम् नैगमार्थविरुद्धत्वात् - ॥

यत्तु देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा नि॰ अ॰ ७ खं॰ १५ मन्त्रा मननात् छन्दांसि छादनादिति एतेन निरुक्ते पठितत्वाद्यस्यार्थं करोति अत्र दानशब्देनेश्वरो विद्वांसो मनुष्याश्च देवतासंज्ञाः सन्ति दानं च स्वस्वत्वनिवृत्ति पूर्वकं परस्वत्वोत्पादनमिति दीपनात्सूर्यादयः उपदेशाद्यर्थकाल द्योतनान्मातृ पित्राचार्य्यातिथयश्चेति - ॥

तदतितुच्छम् उक्तलक्षणलक्षितदानविशिष्टत्वेन विद्वदीश्वरातिरिक्तमनुजेष्वप्यतिव्याप्तेः विद्यादिदातृत्वाभ्युपगमे तु विद्वदीश्वरयोः स्वस्वत्वनिवृत्तिपूर्वकविद्यादिप्रदानाभावेनाव्याप्तेश्च कर्मफलप्रदत्वेन प्रकाशात्मकत्वेन च स्वयंप्रभातनिखिलवेदत्वेन च सुशोभितत्वेन त्रिदिवनिवासित्वेन चेन्द्रादीनां परमात्मनश्च देवशब्दशक्यत्वे विद्वन्मनुजानां देवशब्दशक्यत्वाभावाच्च सर्वथा देवतावत् सम्पत्वेन गौणया वृत्त्या सिंहो माणवक इतिवत् तत्प्रशंसार्थक देवशब्दप्रयोगो भवतु नाम मातादिष्वपि नैतावता तेषां सा संज्ञा भवितुमर्हति अन्यथा सिंहपदेनापि माणवकस्यान्यत्र ग्रहणं स्यादिति आचार्य्यं मां विजानीयादित्याकौचाचार्य्यस्येश्वररूपतयोपास्यत्वप्रतिपादनेन तद्रीत्याचार्य्यत्वेनेश्वरस्य ग्रहणमेव न स्यात् ईश्वरशब्दस्याचार्यएव शक्त्यभ्युपगमेन निरीश्वरवादिमतस्याङ्गीकर्त्तव्यत्वाच्च न तत्र सूर्यो भातीति काठकमन्त्रस्तु वल्ली॰ ४ मं॰ १५ नास्माकमननुकूलः ईश्वरस्य सूर्यादिप्रकाशकत्वेन स्वप्रकाशत्वात् ईश्वरस्य मुख्यदेवत्वेन तदुपासनायां च नास्माकं विवादः किन्तु तद्रूपाः सर्वे देवा भोगाय चिन्त्या मुमुक्षुभिश्च प्रथममुपास्याः चेतः शुद्धौ ब्रह्मोपासनाज्ञाने स्वयमेव भवतः उपेयप्राप्तेरुपायसाध्यत्वात् नैतद्देवा आप्नुवन्पूर्वमर्षत् य॰ अ॰ ४० मं॰ ४ इत्यादौ देवशब्देनेन्द्रियाधिष्ठातृदेवाभेदव्यपदेशो यथा तत्तु योगशास्त्रे चेन्द्रियादिष्वपि देवशब्दशक्तिर्नैतावतेन्द्रादौ तच्छक्तिर्योगरूढिर्वा बाध्यते नहि हरिशब्दस्य मर्कटाभिधायित्वे ईश्वरवाचकत्वं विहन्यते किन्तु संयोगो विप्रयोगश्चेत्यादिना तत्र तत्राभिधानियम्यत इति - ॥

यमुगुणदोषकीर्तनं स्तुतिरिति - ॥

तत्र गुणकीर्त्तनस्य स्तुतित्वेन दोषकीर्त्तनस्य निन्दात्वेन सर्वत्र व्यवहारात् तन्म तेनिन्दोच्छेदापत्तेः ॥

यत्तु कर्म्मकाण्डे सकामभागस्तत्र भोगायेश्वरः प्रार्थ्यते उपासनाज्ञानकाण्डेतु निष्कामभागस्तत्र तत्प्राप्तिरेव प्रार्थ्यत इति भेदः न कुत्रापीश्वरार्थत्याग इति ते दाभिप्राय इति- ॥

तदयुक्तम् कर्मकाण्डे देवतारूपेणापि तद्रूपेण चेश्वरस्य सञ्ज्ञया अभिधानात् उपासनायां सविशेषस्य ज्ञानकाण्डे निर्विशेषस्य तस्य यथाधिकारं प्रतिपादना त् अग्निन्तंमन्येयोवसुरितिमन्त्रे ऋ· अष्ट· ३ अध्या·८ व २२ सू·६ मं·१ सोग्निर्यौवसुर्गृणेतंयमायन्तिधेनवइत्या· २ तत्रत्ये मन्त्रे अग्निं घृतेनवर्द्धयेतिमन्त्रे ऋ·अ·४ अ·१व·७ सू·१४ मं·६ बृहद्वयोहिभानवेअर्चादेवायाग्नये- यंमित्रंनप्रशस्तिभिर्मर्त्तासोदधिरेपुरः अष्टकादिसर्वंवत् सू·१६ मं·१ अत्रमन्त्रे चान्येषु बहुषु मन्त्रेषु अग्न्यादिदेवतानांस्वरूपस्य काण्डत्रयेपिस्पष्टं प्रतिपादनाच्च काण्डत्रयेपितस्यैवप्रतिपाद्यत्वे ज्ञानकाण्डे तद्विषयकप्रश्नोत्तरयोरयुक्तत्वाच्च माहाभाग्याद्देवताया एक आत्मा बहुधास्तूयते एकस्यात्मनोन्येदेवाः प्रत्यङ्गानिभवन्ति कर्मजन्मान आत्मजन्मान आत्मैवैषांरथो भवत्यात्माऽश्वा आत्मायुधमात्मेषव आत्मा सर्वं देवस्य देवस्येति· अ·७ खं·४ तिनिरुक्तमपीश्वरस्य सर्वेन्द्रादिदेवतारूपेणावस्थितिं वदति देवतायाः श्रीपरमेश्वरस्य माहाभाग्यात्सर्वशक्तिमत्त्वादेकस्यापिबहुधेन्द्रादिरूपेणावस्थितिः अपिचवेदेषुसर्वेदेवास्तस्याङ्गप्रत्यङ्गरूपां सन्ति देवस्य देवस्य सर्वमुपकरणमपि रथादिकमीश्वररूपमेव ईश्वरबुद्ध्यातेषांदेवानांतदुपकरणानांचोपास्यत्वमितियास्काभिप्रायः तद्यदिदमाहु रित्यादिवाजसनेयिब्राह्मणानुरोधात् तस्मात्त्वजहठमग्निमीलइत्यादि मन्त्रेष्वग्न्यादिपदानीश्वरवाचकान्येवनचेतनाग्न्यादिदेवताबोधकानीत्याकारकं याह्यिश्रीबहुज्ञसायणमाधवाचार्य्यादिव्याख्यानशरणम्-

यतुयेत्रिंशतित्रयस्परस्तइति ऋ·अ·६ त्रयस्त्रिंशतेति यजु·अ १४ यस्यत्रयस्त्रिंशद्देवाइति अथर्व· कां १० प्र २३ अनु·४ सहोवाच म

स्वार्थप्रामाण्येन = ३

दीनामन्यतममप्रमाणमस्ति इतिहासपुराणमपियौरुषेयत्वात्प्रमाण
न्तरमूलतामाकाङ्क्षते अर्थवादाश्चापि विधिनैकवाक्यतात्तत्स्तुत्यर्थाः स
न्तो नयाथार्थ्यंगच्छेयुर्न देवादीनां विग्रहादिसम्भवे कारणभावं प्रतिपद्यन्ते यतः
शब्दः सशब्दार्थ इति शब्दन्यायविदुक्तेः प्रमाणान्तरेणतु यत्रस्वार्थोपिसमर्थ्यते
यथावायोः क्षेपिष्ठत्वंतत्रप्रमाणान्तरवशात्सोऽभ्युपेयतेनतुशब्दसामर्थ्यात्
यत्रतुप्रमाणान्तरमस्ति यथादेवताविग्रहादिपञ्चके सोऽर्थः शब्दादेवावग
न्तव्यः अतत्परशब्दोनतदवगमयितुमलमितितदवगमायास्यतत्रापिता
त्पर्य्यमभ्युपेतव्यम् नचैकंवाक्यमुभयपरंभवतीतिवाक्यंभिद्येतनचसम्भ
वत्येकवाक्यत्वेवाक्यभेदोयुज्यते तस्मात्प्रमाणान्तरानधिगतविग्रहादि
मत्ताअनन्यपरात् शब्दादवगन्तव्येतिमन्त्रोऽर्थमात्रमितिमन्त्राश्चव्रीह्यादि
वत्श्रुत्यादिभिस्तत्रतत्रविनियुज्यमानाःप्रमाणभावानतुप्रवेशिनः क
थमुपयुज्यन्तांनेष्वेतेषुकर्मस्वित्यपेक्षायां दृष्टप्रकारेसम्भवतिनादृष्टकल्प
नोचितादृष्टश्चप्रयोगसमवेतार्थस्मारणं स्मृत्वाचानुतिष्ठन्ति अनुष्ठातारः
पदार्थान् औत्सर्गिकीचार्थपरतापदानामित्यपेक्षितप्रयोगसमवेतार्थस्मर
णतात्पर्याणांमन्त्राणांनानधिगतेविग्रहादावपितात्पर्य्यंयुज्यतइतिनते
भ्योपितत्सिद्धिरितितस्माद्देवताविग्रहवत्त्वादिग्राहकप्रमाणाभावइति
चेन्न— ॥

प्रत्ययाप्रत्ययौहिसद्भावासद्भावयोः कारणंनान्यार्थत्वमनन्यार्थत्वंवा तथा
हि अन्यार्थमपिप्रस्थितःपथिपतितंतृणपर्णाद्यस्तीतिएवप्रतिपद्यते
नचतत्रहितृणपर्णादिविषयं प्रत्यक्षंप्रवृत्तमस्ति येनतदस्तित्वंप्रतिपद्य
ते अत्रपुनर्विध्युद्देशैकवाक्यत्वाभावेनस्तुत्यर्थार्थवादेनपार्थग्येनदृ
ष्टान्तविषयाप्रवृत्तिः शक्याध्यवसितुम् शाब्दीखल्वियंगतिर्यत्तात्पर्या
धीनवृत्तित्वंनह्यन्यपरःशब्दोऽन्यत्रप्रमाणंभवितुमर्हति नहिश्वित्रिनि
र्णोमनपरंश्वेतोधावतीतिवाक्यमितःसारमेयवेगवद्ग मनंगमयितुमर्ह
ति नहिमहावाक्येप्रत्यायकेऽवान्तरवाक्यस्यपृथक्प्रत्यायकत्वमस्तिय
थानसुरांपिबेदितिनञ्वतिवाक्येपदत्रयसम्बन्धात्सुरापानप्रतिषेधएवै

कोर्थोऽवगम्यतेनपुनः सुरांपिबेदितिपदद्वयसम्बन्धात्सुरापानविधिरपी
तिशक्यतेवगन्तुंनचप्रत्ययमात्रात्सोप्यर्थोस्य भवति तत्प्रत्ययस्यभ्रान्ति
त्वात् नपुनः प्रत्यक्षादीनामियंगतिः नह्युदकाहरणार्थिनाघटदर्शनायो
न्मीलितेचक्षुर्घटपटौवापटंवाकेवलंनोपलभ्यते इतिवाच्यम् युक्तंयत्सुरा
पानप्रतिषेधेपदान्वयस्यैकत्वादवान्तरवाक्यार्थस्याग्रहणम् विध्युद्देशा
र्थवादयोस्त्वर्थवादस्थानिपदानिदृष्टयागन्वयंदृष्टान्तविषयंप्रतिपाद्यानन्त
रंकैमर्थ्यवशेनविधेःस्तावकत्वंप्रतिपद्यन्ते यथाहिवायव्यंश्वेतमालभेतभू
तिकामइत्यत्रविध्युद्देशवर्त्तिनांवायव्यादिपदानांविधिसम्बन्धोनैवंवायु
र्वैक्षेपिष्ठादेवतावायुमेवस्वेनभागेनोपधावतिसएवैनंभूतिंगमयतीत्येषा
मर्थवादगतानांपदानाम् नहिभवतिवायुर्वैश्वालभेतक्षेपिष्ठादेवताश्वाल
भेतेत्यादिर्वायुस्वभावसङ्कीर्त्तनेनत्ववान्तरमन्वयंप्रतिपद्यैवंविशिष्टदैवत्य
मिदंकर्मेतिविधिंस्तुवन्ति तद्यत्रसोवान्तरवाक्यार्थःप्रमाणान्तरगोचरोभ
वति तत्रतदनुवादेनार्थवादःप्रवर्त्तते यत्रप्रमाणान्तरविरुद्धस्तत्रगुण
वादेन यत्रतदुभयंनास्तितत्रकिंप्रमाणान्तराभावाद्गुणवादःस्यादा
होस्वित्प्रमाणान्तराविरोधाद्विद्यमानवादइति प्रतीतिशरणैर्विद्यमानवा
दएवाश्रयणीयोनगुणवादः एतेनमन्त्रोव्याख्यातः अपिचविधिभिरे
वेन्द्रादिदैवत्यानिहवींषिचोदयद्भिरपेक्षितमिन्द्रादीनांस्वरूपम् नहि
स्वरूपरहितायइन्द्रादयश्चेतस्यारोपयितुंशक्यन्ते नचचेतस्यनारूढायैत
स्यैदेवतायैहविःप्रदातुंशक्यते श्रावयतिचयस्यैदेवतायैहविर्गृहीतंस्या
त्तांमनसाध्यायेद्वषट्करिष्यन्निति नचशब्दमात्रमर्थस्वरूपंसम्भवति शा
ब्दार्थयोर्भेदात् यत्रयादृशंमन्त्रार्थवादयोरिन्द्रादीनांस्वरूपमवगतंनतता
दृशंशब्दप्रमाणकेनप्रत्याख्यातुंयुक्तम् इतिहासपुराणमपिव्याख्यातेनमा
र्गेणसम्भवन्मन्त्रार्थवादमूलत्वात्प्रभवति देवताविग्रहादिप्रपञ्चयितुम्
प्रत्यक्षादिमूलमपिसम्भवति भवतिह्यस्माकमप्रत्यक्षमपिचिरन्तनानां
प्रत्यक्षम् तथाचदेवादयोव्यासादिभिःप्रत्यक्षंव्यवहरन्तीतिस्मर्य्यते य
स्तुब्रूयादिदानीन्तनानामिवपूर्वेषामपिनास्तिदेवादिभिर्व्यवहर्त्तुंसामर्थ्य

यित्तु यज्ञयोर्वर्त्तते लक्षितलक्षणयात्वशनिपश्चो: एतएवत्रयस्त्रिंशद्देवाइति
महिमानएवैतेषामेतेत्रयस्त्रिंशद्देवाइतिनिर्ब्रुवन्तीश्रुतिरेकैकस्यदेवतात्म
नोयुगपदनेकरूपतांदर्शयति तथात्रयस्त्रिंशतोपिषडाद्यन्तर्भावक्रमे
णकतमएकोदेवइतिप्राणइतिप्राणैकरूपतांदेवानांदर्शयन्तीतस्यैवैकस्य
प्राणस्ययुगपदनेकरूपतांदर्शयति षस्मामग्निपृथिवीवाय्वन्तरिक्षादित्य
दिवांमहिमानोनततोभिद्यन्तेषडेवतुदेवाः तेचषट्अग्निंपृथिवींचैकी
कृत्य अन्तरिक्षंवायुंचैकीकृत्यादिवमादित्यंचैकीकृत्यत्रयोलोकास्त्र
यएवदेवाभवन्ति अतएवचैतेत्रयोन्नप्राणयोरन्तर्भवन्तोन्नप्राणौद्वौदे
वौभवतः अन्नप्राणौभोग्यभोक्त्रभिमानिनौ तावप्यध्यर्द्धोदेवएकःकतमो
ध्यर्द्धोयोयंवायुःपवते कथमयमेकएवाध्यर्द्धः यदस्मिन्सतिसर्वमिदमध्य
र्द्धोत्तेनाध्यर्द्धइति अध्यर्द्धशब्दोरूढ्यासंख्यावाचीयोगेनतुसमृद्धंवायुंवक्ति
वायुःसूत्रात्मावायुर्वैगौतमसूत्रमितिश्रुतेः कतमइतिसएवाध्यर्द्धःप्राणए
कोब्रह्मसर्वदेवात्मत्वेनबृहत्वाद्ब्रह्मतदेवत्यदित्याचक्षतेत्यच्छब्दःपरोक्षवा
ची अक्षतब्रह्मसाक्षात्कारंपुरुषंप्रतिब्रह्मणःशास्त्रैकसमधिगम्यत्वात्पारो
क्ष्यमिति तत्प्राणशब्दवाच्यःपरमात्मैवैकोमुख्योदेवः तस्मादेकस्यैवदेवस्य
महिमवशादनेकदेवतारूपतामाहश्रुतिः ॥

तथाचमन्त्रवर्णः इन्द्रंमित्रंवरुणमित्यादितत्त्वरूपंचश्वेताश्वत
राःस्पष्टमामनन्ति एकोदेवःसर्वभूतेषुगूढःसर्वव्यापीसर्वभूतान्त
रात्मा कर्माध्यक्षःसर्वभूताधिवासःसाक्षीचेताःकेवलोनिर्गुणश्चेति॰
नचदेवैकत्वेकथमयमैन्द्रोयमाग्नेयोमन्त्रऐन्द्रमाग्नेयमिहविदितिभेदोदृश्यतेइतिवा
च्यम् एकत्वेपिदेवस्यमूर्त्तिभेदेनमन्त्रादिव्यवस्थोपपत्तेः यथाशैवागमेषुशिव
स्यैकत्वेपिदक्षिणामूर्त्तिचिन्तामणिमृत्युञ्जयादयोमन्त्रामूर्त्तिविशेषेषुव्यव
स्थिताः यथाचवैष्णवागमेषुगोपालवामनादयोमन्त्रास्तथामूर्त्तिभेदेनदेव
ताभेदेकोमन्त्रादिःकिंनस्यात् एकस्यैववास्तवस्यदेवस्यकर्मानुष्ठानदशा
यामौपाधिकभेदोभ्युपगम्यतएव अतएववाजसनेयिब्राह्मणेऽइष्टिप्रकरणे
कर्मानुष्ठानप्रसिद्धंदेवभेदमनूद्यतदपवादेनवास्तवंदेवैकत्वमवधारितं तद्य

दिदमाहुरित्यादिना नचैकस्माद्देवात्फलभेदोदुःसम्पाद इति शङ्क्यम् उपा
स्तिप्रकारभेदेन तदुपपत्तेः तंयथायथोपासते तदेव भवतीति श्रुतेः ॥
यत्तु दयानन्दः रुद्रशब्देन दशविधप्राणान् गृह्णाति एकादशमात्मानं-
तच्च वायुग्रहणेन तद्ग्रहणात् आत्मनश्च परमात्मदेवाभिन्नत्वात् ॥
यत्तु एतएव देवाव्यावहारिकमेतेषु देवत्वं दिवुधातोर्व्यवहारार्थत्वात् नाप्येते
षुचेतनत्वाकृत उपास्यत्वं नह्येते षु देवदत्तादिवद्दर्शपतेचेष्टेति- ॥
तदुपेक्ष्यम् मन्त्रार्थवादेतिहासपुराणलोकेभ्यो देवानां चेतनत्वाभ्युपगमात्
मन्त्रार्थवादास्तु इत्थम् येदेवादिव्येकादशस्थपृथिव्यामध्येकादशस्थ-
अप्सुक्षितोमहिनैकादशस्थ ते देवासो यज्ञमिमं जुषध्वमिति स्म- य- अ-७
मं- १९ सजोषा इन्द्र सगणो मरुद्भिः सोमम्पिब वृत्रहा शूर विद्वान् य- अ-७
मं ३७ इति आतिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी य- अ-८ मं ३३ ग्रहा
ऊर्ज्जाहुतयइति अ-९ य- मं-४ वातोवामनोवागन्धर्वाः सप्तविंशतिः-
तेऽग्रेऽश्वमयुञ्जंस्ते अस्मिञ्जवमादधुरिति य- अ-९ मं-७ जघ्नन्वृत्रं
वितरणमिन्द्रहस्तमिति ऋ- अष्ट-८ अध्या-१ सू ४७ मं १० अनु-४ व-२
मं-१ तुविग्रीवोवपोदरः सुबाहुरन्धसो मदे इन्द्रो वृत्राणि जघ्नत इति विग्र
हवत्त्वं चेतनत्वं च देवताया अभिवदंति अद्धीन्द्र पिबेत्यादयः सजोषा इन्द्र इ
त्यादयश्च हविर्भोजनं इन्द्रो दिव इन्द्र ईशे पृथिव्या इन्द्रोपामिन्द्र इत्पर्वताना
मिन्द्रो वृधामिन्द्र इन्मेधिराणामिन्द्रः क्षेमे योगे हव्य इन्द्र इति अष्ट ८ अध्या
-४ व १६ मं १० अनु-७ सू ८९ मं १० देवानामीशनं आहुतिभिरेवदे
वान्हुतादः प्रीणाति तस्मै प्रीता इषमूर्ज्जं च यच्छन्तीति त्वम् एवेनमिन्द्रः प्र
जया पशुभिस्तर्पयतीति च श्रुतिर्देवतायाः प्रसादं प्रसन्नायाश्च फलदानं द
र्शयति धर्मशास्त्रकारा अपि तेन्द्राः स्तर्पयन्त्येनं सर्वकामफलैः शुभैरिति
याज्ञवल्क्य- अ-१ पुराणवचांसि भूयांसि लौकिका अपि देवताया विग्र
हहविर्भोजनैश्वर्य प्रसाद फलदान रूप पञ्चकं प्रपञ्चं वदन्ति-
स्पादेनत् ननावल्लौकोनामकिञ्चित्स्वतन्त्रं प्रमाणमस्ति प्रत्यक्षादिभ्य
एवस्य विचारितविशेषेभ्यः प्रसिद्धा न पौलोकात्प्रसिद्धा तिनचात्रप्रत्यक्षा

हिमानइत्यतआरभ्यत्वदित्याचक्षतइत्यन्तेश. कां.१४ प्र.१६ एताभिः श्रुतिभिर्देवानांत्रयस्त्रिंशत्संख्यात्वमचेतनत्वेनानुपास्यत्वंचकथयति-नदसुन्दरम् एकस्यापिप्राणपदाभिधेयस्यपरमात्मनः स्वमहिम्नानेकदेवतारूपत्वंदेवतानांचपरात्मरूपाणांनिजमहिमवशादनेकरूपत्वमित्याद्यात्मकश्रुतितात्पर्य्यानवबोधमूलकत्वात् वाजसनेयिब्राह्मणेशाकल्ययाज्ञवल्क्यसम्वादएवमाम्नायते-

अथहैनंविदग्धःशाकल्यःपप्रच्छकतिदेवायाज्ञवल्क्येतिसहैतयैवनिविदाप्रतिपेदेयावन्तोवैश्वदेवस्यनिविद्युच्यन्ते त्रयश्चत्रीवशताचत्रयश्चत्रीचसहस्रेत्योमितिसहोवाचकत्येवदेवायाज्ञवल्क्येतित्रयस्त्रिंशदित्योमितिहोवाचकत्येवदेवायाज्ञवल्क्येतिषडित्योमितिहोवाचकत्येवदेवायाज्ञवल्क्येतित्रयइत्योमितिहोवाचकत्येवदेवायाज्ञवल्क्येतिद्वावित्योमितिहोवाचकत्येवदेवतायाज्ञवल्क्येतिअध्यर्द्धइत्योमितिहोवाचकत्येवदेवतायाज्ञवल्क्येकइत्योमितिहोवाचकतमेतेत्रयश्चत्रीचशताचत्रयश्चत्रीचसहस्रेतिसहोवाचमहिमानएवैषामेतेत्रयस्त्रिंशत्त्वेवदेवाइतिकतमेतेत्रयस्त्रिंशदिति अष्टौवसवएकादशरुद्राद्वादशादित्यास्त एकत्रिंशदिन्द्रश्चैवप्रजापतिश्चत्रयस्त्रिंशाविति २ कतमेवसवइति अग्निश्चपृथिवीचवायुश्चान्तरिक्षंचादित्यश्चद्यौश्चचन्द्रमाश्चनक्षत्राणिचैतेवसवएतेषुहीदंसर्ववसुहितमेतेहीदंसर्ववासयन्ते तद्यदिदंसर्ववासयन्तेतस्माद्वसवइति ४ कतमेरुद्राइति दशेमेपुरुषेप्राणाआत्मैकादशस्तेयदास्मान्मर्त्याच्छरीरादुत्क्रामन्त्यथरोदयन्ति तद्यद्रोदयन्तितस्माद्रुद्राइति ५ कतमआदित्याइतिद्वादशवैमासाःसंवत्सरस्यैतआदित्याएतेहीदंसर्वमाददानायन्तितद्यदिदंसर्वमाददानायन्तितस्मादादित्याइति ६ कतमइन्द्रःकतमःप्रजापतिरितिस्तनयित्नुरेवेन्द्रोयज्ञःप्रजापतिरितिकतमःस्तनयित्नुरित्यशनिरितिकतमोयज्ञइतिपशवइति ७ कतमेतेत्रयोदेवा

इतीम एव त्रयो लोका एषु हीमे सर्वे देवा इति कतमौ तौ द्वौ देवावित्य
न्नं चैव प्राणश्चेति कतमोऽध्यर्द्ध इति योऽयं पवत इति ८ तदाहुर्यदय
मेक एव पवतेऽथ कतमध्यर्द्ध इति यदस्मिन्निदं सर्वमध्यार्द्ध्नो
त्तेनाध्यर्द्ध इति कतम एको देव इति स ब्रह्म त्यदित्याचक्षते इति ९ ॥
आसां श्रुतीनामयमर्थः उपासनार्हाणां देवानां संख्याविस्तारेण कियतीति शाकल्ये
न पृष्टो याज्ञवल्क्यो विजिगीषुकथायाः प्रवृत्तत्वात्स्वबुद्धिव्यामोहाय निविदा प्र
त्युत्तरं दत्तवान् निविन्नाम वैश्वदेवनामके शस्त्रविशेषे पठितानां संख्यावाचिनां प
दानां समुदायमात्रम् इति वैदिकप्रसिद्धिः ततो यावन्तो देवा वैश्वदेवस्य निविद्युच्य
न्ते तावन्त उपास्या इत्युक्तं भवति तानि पदानि त्रयश्च त्री च शता त्रयश्च त्री च सह
स्रेति शतत्रयं सहस्रत्रयं षट्कं च देवविस्तारः त्रीणि शतानि त्रीसहस्राण्यग्निं त्रिंशच्च दे
वा नवचासपर्य्यन्- औक्षन्घृतैरस्तृणन्बर्हिरस्मै आदित् होतारं न्यसादयन्त अ
ष्ट ३ अ० १ व० ८ सू० ९ मं० ९ ऋग्वे० इति मन्त्रे तेषामुपास्यत्वमुक्तं चेतनत्वं
चेति कात्यैवेत्येवकारेण तत्र तत्र देवान्तरशङ्कां व्युदस्यते य एव देवाः सर्वविस्तर
स्त एव संक्षेपेण कियन्त इति च तत्र प्रश्नार्थः कतीति संख्याप्रश्नः कतम इति
सङ्ख्येयप्रश्नः एवं च शाकल्येन संख्येयेषु पृष्टेषु कतमे त इत्यनेन याज्ञ
वल्क्यस्योत्तरं महिमान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति अष्टौ वसव
इत्यादयस्त्रयस्त्रिंशद्देवाः तत्राग्न्यादयोऽष्टौ वसवः एते हि प्राणिनां कर्मफ
लाश्रयेण कार्यकारणसंघातरूपेण परिणमन्तो जगदिदं सर्वं वासयन्तो व
दयन्ति तस्माद्वसवः एतेषु शब्दप्रवृत्तिर्यौगिकी एतन्महिमस्वीकृतदेवता
विग्रहेषु तु योगरूढिः कतमे रुद्रा इति दशेमे पुरुषे प्राणाः बुद्धिकर्मे
न्द्रियाणि दशैकादशं च मनः तदेतानि प्राणाः तद्वृत्तित्वात् ते हि प्रायणका
ल उत्क्रामन्तः पुरुषं रोदयन्तीति रुद्राः कतम आदित्या इति द्वादश मासाः
संवत्सरस्यावयवाः पुनः पुनर्वर्त्तमानाः प्राणभृतामायूंषि च कर्मफलोप
भोगं चादापयन्तीत्यादित्याः अशनिरिन्द्रः स हि बलं स हीन्द्रस्य परमाईश
ना तया हि सर्वान्प्राणिनः प्रमापयति तेन स्तनयित्नुरिन्द्रः यज्ञः प्रजापतिः
यज्ञसाधनं यज्ञरूपं च पशवः प्रजापतिः इन्द्रप्रजापतिशब्दौ लक्षणया स्तन

मितिसजगद्वैचित्र्यप्रतिषेधेदिदानीमिवचनान्यदापिसार्वभौमःक्षत्रियो
स्तीतिब्रूयात्ततश्चराजसूयादिचोदनाउपरुन्ध्यादिदानीमिवचकालान्तरेप्य
नवस्थितप्रायान्वर्णाश्रमधर्मान्प्रतिजानीत ततश्चव्यवस्थाविधायिशास्त्र
मनर्थकंकुर्य्यात् तस्माद्धर्मोत्कर्षवशाच्चिरन्तनादेवादिभिःप्रत्यक्षंव्यव
जह्रुरितिगम्यते अपिचस्मर्य्यतेस्वाध्यायादिष्टदेवतासंप्रयोगइत्यादियोगो
प्यणिमाद्यैश्वर्य्यप्राप्तिफलःस्मर्य्यमाणोनशक्यःसाहसमात्रेणप्रत्याख्या
तुम् श्रुतिश्चश्वेताश्वतरोपनिषदि अध्या॰२ मं॰ १२ योगमाहात्म्यंप्रख्या
पयति पृथ्व्याप्यतेजोनिलखेसमुत्थितेपञ्चात्मकेयोगगुणेप्रवृत्ते नतस्य
रोगोनजरानमृत्युःप्राप्तस्ययोगाग्निमयंशरीरमिति ऋषीणामपिमन्त्रब्रा
ह्मणदर्शिनामस्मदीयेनसामर्थ्येननोपमातुंयुक्तम् तस्मात्समूलमिति
हासपुराणम्-लोकप्रसिद्धिरपिनसतिसम्भवेनिरालम्बनाध्यवसातुंयुक्ता
तस्मादुपपन्नोमन्त्रादिभ्योदेवादीनांविग्रहवत्त्वाद्यवगमइत्यलमतिप्रसङ्गेन—
इममेवार्थंश्रीभगवान्वेदव्यासोपिसूत्रयामास तदुपर्य्यपिबाद
रायणःसम्भवात् अ॰ १ सू॰ ॥
अस्यार्थस्तुहृदयाद्यपेक्षयातुमनुष्याधिकारत्वादितिसर्वसूत्रेअङ्गुष्ठमात्रः
पुरुषोन्तरात्मासदाजनानांहृदयेसन्निविष्टःश्वेताश्वतर अ॰ ३ मु॰ १३ इत्य
त्राङ्गुष्ठमात्रश्रुतिर्मनुष्यहृदयापेक्षयामनुष्याधिकारत्वाच्छास्त्रस्येत्युक्तंतत्प्रस
ङ्गेनेदमुच्यतेबाढंमनुष्यानधिकरोतिशास्त्रंनतुमनुष्यानेवेतीहब्रह्मवि
ज्ञानेनियमोस्तीतिप्रतिपादनायाह तदुपरीतितेषांमनुष्याणामुपरियेदे
वादयस्तानप्यधिकरोतिशास्त्रमितिबादरायणआचार्य्योमन्यते कस्मा
त्सम्भवात् सम्भवतिहितेषामप्यर्थित्वाद्यधिकारकारणम् तत्रार्थित्वंता
वन्मोक्षविषयेदेवादीनामपिसम्भवति विकारविषयविभूत्यनित्यतालो
चनादिनिमित्तम् तथासामर्थ्यमपितेषांसम्भवति मन्त्रार्थवादेतिहासपु
राणलोकेभ्योविग्रहवत्त्वाद्यवगमात् नचतेषांकश्चित्प्रतिषेधोस्तिनचोप
नयनशास्त्रेणैषामधिकारोनिवर्त्यतेउपनयनस्यवेदाध्ययनार्थत्वात् ते
षांचस्वयंप्रतिभातवेदत्वात् सचमनुष्याणामिहजन्मनीवदेवानांप्राचि

भवेविधिवदधीतआम्नायइहजन्मनिस्मर्य्यमाणः अतःस्वयम्प्रतिभातो
वेदःसम्भवति अपितेषांविद्याग्रहणाय ब्रह्मचर्य्यादिदर्शयतिश्रुतिः ए
कशतंहवैवर्षाणिमघवान्प्रजापतौब्रह्मचर्य्यमुवासभृगुर्हवैवारुणिर्वरु
णंपितरमुपससाद अधीहिभगवोब्रह्मेत्यादिर्यदपिकर्मस्वनधिकारकार
णमुक्तंनदेवानांदेवतान्तराभावान्नऋषीणामार्षेयान्तराभावात् प्राचां
वसुभृग्वादीनांधिकारत्वेनेदानींदेवर्षित्वाभावात्इतिनतद्धि विद्यास्वस्ति
नहीन्द्रादीनांविद्यास्वधिक्रियमाणानामिन्द्राद्युद्देशेनकिञ्चित्कृत्यमस्ति
नचभृग्वादीनांभृग्वादिसगोत्रतया- तस्माद्देवादीनामपिविद्यास्वधिकारः
केनवार्य्यतेदेवाद्यधिकारेप्यङ्गुष्ठमात्रश्रुतिःस्वाङ्गुष्ठमात्रापेक्षयानविरु
ध्यतेइति- ॥

स्यादेतद्यदिविग्रहवत्त्वाद्यभ्युपगमेनदेवादीनांविद्यास्वधिकारोवर्ण्येत
विग्रहवत्त्वादृत्विगादिवदिन्द्रादीनामपिस्वरूपसन्निधानेनयागेऽङ्गभा
वोऽभ्युपगम्येततदाचविरोधःकर्मणिस्यात् नहीन्द्रादीनांस्वरूपसन्निधा
नेनयागेऽङ्गभावोदृश्यतेनचसम्भवति बहुषुयागेषुयुगपदेकस्येन्द्रस्य
स्वरूपसन्निधानानुपपत्तेः एतदुक्तम्भवति मन्त्रादिपदसमुच्चयात्प्रती
यमानोर्थःप्रमाणान्तराविरोधेसत्युपेतव्योनतुविरोधेप्रमाणान्तरविरु
द्धंचेदंविग्रहवत्त्वादिदेवतायाः तस्माद्यजमानःप्रस्तरइत्यादिवदुपचा
रितोर्थोमन्त्रादिभिर्बोध्यः तथाचविग्रहाद्यभावाच्छब्दोपहितोयोऽर्थो
पहितोवाशब्दोदेवतेत्यचेतनत्वान्नास्याःकाचिदधिकारइत्याशङ्क्य-
**सूत्रम् विरोधःकर्मणीतिचेन्नानेकप्रतिपत्तेर्दर्शनात्** अस्यसू
त्रस्यार्थः नायमस्तिविरोधःकस्मादनेकप्रतिपत्तेः एकस्यापिदेवतात्मनो
युगपदनेकरूपप्रतिपत्तिःसम्भवतिकथमेतदवगम्यते दर्शनात्श्रु
तिषुस्मृतिषुच तथाहि एकस्यानेककायनिर्माणे अदर्शनाद्वानयु
ज्यतेबाधदर्शनाद्वानप्रथमःश्रुतिस्मृतिभ्योदर्शनात् नहिलौकिकप्र
माणेनादृष्टत्वादागमेनदृष्टमदृष्टम्भवति माभूद्यागादीनामपि
स्वर्गादिसाधनत्वमदृष्टमिति मनुष्यशरीरस्यमातापितृसंयोगजत्व

दयानन्दमतमर्दनम्·

नियमादसन्निधिपत्रौः संयोगेकृतः सम्भवः सम्भवे वाऽत्र नग्नितोपि धूमःस्या
दिति न द्वितीयः किं शरीरत्वेन हेतुना देवादिशरीरमपि सिषाधयिषसि
तथा चानेकान्तो हेत्वाभासः संस्वेदजोद्भिज्जानां शरीराणामनहेतुत्वात् धूम
हुन्द्रद्रोणादीनां सीताद्रौपदीप्रभृतीनामयोनिजत्वं बलाकाप्यन्तरेणरेतःसे
कं गर्भं धत्त इति लोके रूढिः इच्छामात्रनिर्माणत्वं देहानामदृष्टचरमिति चे
न्न भूतोपादानत्वेन इच्छामात्रनिर्माणत्वासिद्धेः भूतवशिनो हि देवादीनां ना
नाकायचिकीर्षावशाद्भूतक्रियोत्पत्तौ भूतानां परस्परसंयोगेन नानाकायस
मुत्पादानात् दृष्टा च वशिन इच्छावशाद्द्रव्ये क्रिया यथा विषविद्याविद इच्छा
मात्रेण विषशकलप्रेरणम् न च विषविद्याविदो दर्शनेनाधिष्ठानदर्शनात् व्यव
हितविप्रकृष्टभूतादर्शनाद्देवादीनां कथमधिष्ठानमिति वाच्यम् काचाभ्रप
टलपिहितस्य विप्रकृष्टस्य भौमशनैश्चरादेर्दर्शनेनाति अभिचारात् आसन्न
स्वदृष्टयो देवादीनां काचाभ्रपटलादिवत् महीधरादिभिर्न व्यवधीयन्ते न चास्म
दादिवत्तेषां शरीरत्वेन व्यवहितविप्रकृष्टादिदर्शनासम्भवोऽनुमीयत इति वा
च्यम् आगमविरोधिनोऽनुमानस्योत्पादायोगात् अन्तर्धानं चाञ्जनादिनाम
नुजानामिव तेषां प्रभाववलादुपपद्यते तेन सन्निहितानामपि न क्रतुदेशे दर्श
नसम्भविष्यति तस्मात्स्थूलमनेकप्रतिपत्तेरिति तथाहि कति देवा याज्ञवल्क्ये
त्युपक्रम्य त्रयश्च त्री चेत्याद्युत्तरं दत्वा पुनः शाकल्येन कतमेत इति संख्येयस्वरू
पपृष्टे तस्योत्तरं महिमान एवैतेषामेते त्रयस्त्रिंशत्त्वेव देवा इति एकैकस्य देवता
त्मनो महिमवशाद्युगपदनेकरूपतामाह तथा प्राणैकरूपतां देवानां दर्श
यन्ती श्रुतिस्तस्यैवैकस्य प्राणस्य युगपदनेकरूपतां दर्शयति स्मृतिरपि आत्म
नो वै शरीराणि बहूनि भरतर्षभ योगी कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत् १
प्राप्नुयाद्विषयान्कैश्चित्कैश्चिदुग्रं तपश्चरेत् संक्षिपेच्च पुनस्तानि सूर्यो रश्मि
गणानिवेति शारीरके भाष्ये ॥

बादरायणसूत्रञ्चाव· प्रदीपवदावेशस्तथा हि दर्शयति अ·
पा· सू· ॥

योगिनां स्वेच्छया कायकल्पनं तदुपसंहारो भवत इत्यर्थः प्राणानामेकपर्य

णां योगिनामपि युगपदनेकशरीरयोगं दर्शयति किमु वक्तव्यमाजन्मसिद्धानां
देवानामनेकरूपप्रतिपत्तिरिति अनेकप्रतिपत्तेरित्यस्यापरापि व्याख्या विग्र
हवतामपि कर्माङ्गभावचोदनास्वनेका प्रतिपत्तिर्दृश्यते क्वचिदेको विग्रहवान
नेकत्र युगपदङ्गभावं गच्छति यथा बहुभिर्नमस्कुर्वाणैरेको ब्राह्मणो युग
पन्नमस्क्रियते तद्वदिहोद्देश्यपरित्यागात्मकत्वाद्यागस्य विग्रहवतीमप्ये
कदेवतां स्वस्थानस्थितामुद्दिश्य बहवो नानादेशावस्थिता यजमानाः स्वं स्व
द्रव्यं युगपत्परित्यक्ष्यन्तीति विग्रहवत्त्वेपि देवादीनां न किञ्चित्कर्मणि विरु
ध्यत इति ॥

मानामपि विग्रहवत्त्वे विरोधः प्रसज्जि शब्दे तु अर्थेन नित्यसम्बन्धाभावाद्विरोधः
प्रसज्यत इत्याशङ्क्य सूत्रयति ॥

शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् अ० १ पा० ४
अस्यार्थस्तु सर्वत्रास्माभिरुक्तस्तत्र द्रष्टव्यः अन्यच्चात्रैव सूत्रम् ॥

**मध्वादिष्वसम्भवादनधिकारं जैमिनिः अ० १ पा० ४ सू० १३**

अस्यायमर्थः ब्रह्मविद्यास्वधिकारं देवर्षीणां ब्रुवाणः प्रष्टव्यो जायते किं स
र्वासु ब्रह्मविद्यासु सर्वेषामविशेषेण किं वा कासुचिदेव केषांचित् यद्यविशे
षेण सर्वासु तदा मध्वादिष्वसम्भवः कथं असौ वा आदित्यो देवमध्विति अ
त्र मनुष्या आदित्यं मधुध्यासेनोपासीरन् देवादिषु ह्युपासकेष्वभ्युपगम्यमा
नेषु आदित्यः कमन्यमादित्यमुपासीत प्राचामादित्यानामस्मिन्कल्पे क्षीणा
धिकारत्वात् पुनश्चादित्यव्यपाश्रयाणि पञ्च रोहितादीन्युपक्रम्य वस
वो रुद्रा आदित्या मरुतः साध्याश्च पञ्च देवगणाः क्रमेण तत्तदमृतमुपजी
वन्तीत्युपदिश्य स य एतदेवममृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेनै
तदेवामृतं यशस्तेज इन्द्रियं साकल्यं वीर्यान्नादिरूपं दृष्ट्वा तृप्यतीत्यादिना उपलभ्य दृ
वस्वाद्युपजीव्यान्यमृतानि विजानतां वस्वादिमहिमप्राप्तिं दर्शयति वस्वाद
यस्तु कानन्यान्वस्वादीनमृतोपजीविनो विजानीयुः कं वान्यं महिमानं प्रेप्से
युरिति ॥

तथाहि छान्दोग्योपनिषदि असौ वा आदित्यो देवमधु तस्य द्यौ

रेवतिरश्चीनवꣳशोऽन्तरिक्षमपूपो मरीचयः पुत्राः १ तस्य प्रा
ञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्यः ऋच एव मधुकृतः ऋग्वेद एव
पुष्पन्ता अमृता आपस्ता वा एता ऋचः २ एतमृग्वेदमभ्यतपꣳ
स्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्य्यमन्नाद्यꣳ रसोऽजायत ३
तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य रोहित
ꣳ रूपम् ४ एवं दक्षिणारश्म्यादीनुपदिश्य तद्यत्प्रथमममृतं
तद्वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृ
तं दृष्ट्वा तृप्यन्ति एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति २
स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं
दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुदेति ३
स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदा
धिपत्यꣳ स्वाराज्यं पर्य्येतेत्यादि - ॥

एतदर्थस्तु देवानां मोदनात् मध्विव मधु भ्रामरमधुसारूप्यमाह श्रुतिः तस्य
मधुनो द्यौरेव तिरश्चीनवंशः अन्तरिक्षं मध्वपूपः आदित्यस्य मधुनोऽपूपः प
टलमन्तरिक्षमाकाशं तत्रावस्थानात् यानि च सोमाज्यपयःप्रभृतीन्यग्नौ हूय
मानानि तान्यादित्यरश्मिभिरग्निसंवलितैः कृतपाकान्यमृतीभावमापन्नान्यादि
त्यमण्डलमुद्यन्ति मधुपैर्नीयन्ते यथा हि भ्रमराः पुष्पेभ्य आहृत्य मकरन्दं स्व
स्थानमानयन्त्येवमृङ्मन्त्रा भ्रमराः प्रयोगसमवेतार्थस्मरणादिभिः ऋग्वेद
विहितेभ्यः कर्मकुसुमेभ्य आहृत्य तन्निष्पन्नमकरन्दमादित्यमण्डले रोहिता
भिरस्य प्राचीभी रश्मिनाडीभिरानयन्ति तदमृतं वसव उपजीवन्ति तथास्यादि
त्यमधुनो दक्षिणाभी रश्मिनाडीभिः शुक्लाभिर्यजुर्वेदविहितकर्मकुसुमेभ्य
आहृत्याग्नौ हुतं सोमादि पूर्ववत् अमृतभावमापन्नं यजुर्वेदमन्त्रभ्रमरा आ
दित्यमण्डलमानयन्ति तदेतदमृतं रुद्रा उपजीवन्ति तथास्यादित्यमधुनः
प्रतीचीभी रश्मिनाडीभिः कृष्णाभिः सामवेदविहितकर्मकुसुमेभ्य आहृ
त्याग्नौ हुतं सोमादि पूर्ववदमृतभावमापन्नं सामवेदस्तोत्रमन्त्रभ्रमरा आदित्य
मण्डलमानयन्ति तदमृतमादित्या उपजीवन्ति - अथास्यादित्यमधुन उदी

चीभिरति कृत्स्नाभीरश्मिनाडीभिरथर्ववेदविहितेभ्यः कर्मकुसुमेभ्य आहृ
त्याग्नौ हुतं सोमादि सर्वं तदमृतं तत्तमापन्नमथर्वाङ्गिरसमन्त्रभ्रमरास्तदाश्व
मेधवाचस्तोमकर्मकुसुमादितिहासपुराणमन्त्रभ्रमरा आदित्यमण्डलमान
यन्ति तदमृतं मरुत उपजीवन्ति अश्वमेधे वाचस्तोमे च पारिप्लवं शंसतीतिश्र
वणादितिहासपुराणमन्त्राणामप्यस्ति प्रयोगः अथास्यादित्यमधुन ऊर्ध्वा
रश्मिनाड्यो गोप्यास्ताभिरुपासनभ्रमरैः प्रणवकुसुमादाहृत्यादित्यमण्ड
लमानयन्ति तदमृतमुपजीवन्ति साध्या इति किञ्च तत्रैव श्रुतिः पादो वायुः
पादश्चादित्यः पादो दिशः पादो वायुर्वाव संवर्ग आदित्यो ब्रह्मेत्यादेश इत्या
दिश्रुतिषु यथाहि गोष्पादानि गवा वियुज्यन्ते एवमग्न्यादयोऽपि नाकाशेन स
वंगतेनेत्यर्थकास्तु ब्रह्मणश्चत्वारः पादा अग्न्यादयो दर्शिताः तथा च तेषामे
व देवानां तासु देवतास्वोपासनास्वधिकारः सम्भवति तथेमा देवगोत्रमभ
रद्वाजा वयमेव गोत्रमोयं भरद्वाज इत्यादिष्वृषिसंबन्धे पूपासने पुनस्तेषामेव
र्षीणामधिकारः सम्भवति अतश्च न देवादीनामधिकार इति यद्युच्येत तन्न
विशेषेण सर्वेषां देवर्षीणां सर्वासु ब्रह्मविद्यास्वधिकारः किन्तु यथासम्भ
वमिति तत्रेदमुपनिषत्सूत्रम् - ॥

ज्योतिषि भावाच्च अ· १ पा· ४ सू· ३२ ॥ ÷ ॥

यदिदं ज्योतिर्मण्डलं द्युस्थानमहोरात्राभ्यां बम्भ्रमज्जगदवभासयति तस्मि
न्नादित्यादयो देवतावचनाः शब्दाः प्रयुज्यन्ते लोकप्रसिद्धेर्वाक्यशेषप्रसि
द्धेश्च न चैतेषामस्ति चैतन्यम् न ह्येतेषु देवतादिवन्न दनुहृदयाहरपते चेष्टा
न च ज्योतिर्मण्डलस्य हृदयादिना विग्रहेण चेतनतयार्थित्वादिना वा योगो
वगन्तुं शक्यते मृदादिवदचेतनत्वावगमादेतेनाग्न्यादयोऽपि व्याख्याताः तस्मा
द्देवताविग्रहवत्त्वादिग्राहकप्रमाणाभावान्न देवानामधिकार इति पूर्वपक्ष
मुपन्यस्य दूषयति - ॥

भावन्तु बादरायणोऽस्ति हि अ· १ पा· ४ सू· ३३ ॥ ÷

अस्य सूत्रस्यायमर्थः तुशब्दः पूर्वपक्षं व्यावर्तयति बादरायणस्त्वाचार्यो भा
वमधिकारस्य देवादीनामपि मन्यते यद्यपि मध्वादिविद्यासु देवतादिव्यामि

आस्त्वसम्भवोधिकारस्य तथाप्युक्तंहि शूद्रायां ब्रह्मविद्यायां सम्भवोर्थित्वसा
मर्थ्याप्रतिषेधापेक्षत्वादधिकारस्य नचक्वचिदसम्भवइत्येतावतायत्रसम्भ
वस्तत्राप्यधिकारोऽयोग्यो नमनुष्याणामपि न सर्वेषां ब्राह्मणादीनां राजसू
यादिष्वधिकारः सम्भवति तत्रयोन्यायः सोऽत्रापि भविष्यति ब्रह्मविद्यांच
प्रकृत्य भवति दर्शनं श्रौतम् तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथ
र्षीणामिति तेहोचुर्हन्ततमात्मानमन्विष्यामो यमात्मानमन्विष्य सर्वांश्च लो
कानाप्नोति सर्वांश्च कामानिति इन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसुरा
णामित्यादि च स्मार्तमपि गन्धर्वयाज्ञवल्क्यसंवादादि - ॥

यदप्युक्तं ज्योतिषि भावाच्चेत्यत्र ब्रूमः ज्योतिरादि विषया अप्यादित्यादयो दे
वतावचनाः शब्दाश्चेतनावन्तमैश्वर्याद्युपेतन्तं तं देवतात्मानं समर्पयन्ति
मन्त्रार्थवादादिषु तथा व्यवहारात् अस्ति ह्यैश्वर्ययोगाद्देवतानां ज्योतिरा
द्यात्मभिश्चावस्थातुं यथेष्टं च तं तं विग्रहं ग्रहीतुं सामर्थ्यम् तथाहि सुब्र
ह्मण्यार्थवादे श्रूयते मेधातिथेर्मेषेति मेधातिथिं ह काण्वायनं मेषो
भूत्वा जहारेति स्मर्यते च आदित्यः पुरुषो भूत्वा कुन्तीमुपजगामेति शारी
रभाष्यं॰ मृदादिष्वपि चेतनाऽधिष्ठातारोऽभ्युपगम्यन्ते मृदब्रवीदापोऽब्रु
वन्निति दर्शनात् ज्योतिरादेस्तु भूतधातोरादित्यादिषु चेतनत्वमभ्युपेय
ते चेतनास्त्वधिष्ठातारो देवतात्मानो मन्त्रार्थवादादिव्यवहारादिति तस्मा
दर्थित्वादिसम्भवादुपपन्नो देवादीनामपि ब्रह्मविद्यास्वधिकारः क्रममुक्तिद
र्शनान्यप्येवमेवोपपद्यन्त इतिदिक् एतेन स्तुत्यर्थनिर्णायक श्रीभगवद्बादरा
यणप्रणीतस्सर्वोक्तसूत्रतात्पर्यपर्यालोचनया देवानां महिमवत्त्वात्पृथिव्या
दिरूपत्वं देवाश्चेतना इन्द्रादयो भूतिकामैर्मोक्षफलात्मज्ञानोपायभूतचे
तःशुद्धिकामैश्चोपास्या देवास्तु ईश्वरादभिन्ना ईश्वरस्यैव निजमहिम्नानन्त
देवतारूपेणावस्थानात् तथा चेश्वरबुद्ध्या देवोपासनमार्याश्चक्रुः कुर्वन्ति
करिष्यन्ति च देवानाम चेतनतामीश्वरभिन्नतां च वदन्तो वेदार्थानभिज्ञा
अनार्या एव तदुक्तपक्षोपेक्ष्याः सुधीभिरिति सिद्धम् - ॥

यत्तु वदति आत्मेत्येवोपासीतेति श्रुत्या शातपथस्थया ईश्वराद्भिन्नस्योपासना

निराक्रान्तेति- ।

ननूक्तम् आत्मानन्यत्वेनोपासनस्यैव सर्वासूपासनासु मुख्यत्वेन यानयात्मनोऽभेदेनोपासना या विधानात् अथयोन्यां देवतामुपास्तेऽन्योसावहमन्योस्मीति न स वेद यथा पशुरेवं स देवानामिति श्रुतावनात्मविदो देवभोग्यभावप्रदर्शनाच्च अयमर्थः सचास्मिंल्लोके इष्टापूर्त्तादिकर्मभिः प्रीणयन्पशुवद्देवानामुपकरोति अमुष्मिन्नपि तदुपजीवी तदादिष्टं फलमुपभुञ्जानः पशुवदेव देवानामुपकरोतीति गम्यतेऽनात्मवित्वात् तथा चायमात्मा ब्रह्मेति ब्रह्माहमस्मीति महावाक्यनात्मयाविदस्तस्यैवानार्थ्यत्वं स्फुटमुपलभ्यत इति - ।

ऋग्वेदादि० अंके ३ पत्रे ९६ अनुसंगिनये तथमुक्तमनुपक्तिनये निसाधुयत्तु वेदे जड़चेतनयोः पूजाविधानान्ते संशयास्पदं प्राप्ताः सन्तीत्याशङ्क्याह जड़ानां पूजा सत्कारः प्रिया चरणादि रूप इति - ।

तद्धान्तप्रलपनम् जड़वस्तुनि सत्कारप्रियाचरणयोरनर्थकत्वात् तस्मिंस्तदाचरणस्य प्रियाप्रियत्वाभावाच्च तदधिष्ठातृदेवस्य तत्र तत्र पूजाविधानमिति तत्रोद्यप्रतिवचनत्वात् - ।

यत्तु मातृदेवो भव पितृदेवो भवाचार्य्यदेवो भवातिथिदेवो भवेति तैत्तिरीयोपनिषदि प्रपा० ७ अनु० १५ त्वमेव प्रत्यक्षं ब्रह्मासि त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामीति तत्रैव प्रपा० ७ अनु० १ पञ्च देवताः सर्वमनुष्योपास्यत्वेनोक्ताः सशरीराः निःशरीरमेतेषु ब्रह्मेति - ।

तदपि तुच्छम् एतेषु चतुर्षु मात्रादिषु देवतात्वाभावेपि देववदुपास्यत्वप्रतिपादनाभिधानात् शालग्रामादौ विष्णुबुद्धीवत् यथा यथोपासते तदेव भवतीति श्रुतेः अत एव देवपितृकार्यापात प्रमदितव्यमिति मातृदेवो भवेत्यस्यादितत्र दृश्यते अत एव निरुक्तकारो प्याह अपि वा साकामदेवता स्यात्प्राणो देवतावास्ति ह्याचारो लोके देवदेवत्यमतिथिदेवत्यं पितृदेवत्यं यात्तदेवतो मन्त्र इति अन्यद्वदुक्तव्यं विस्तरभीतेरुपरम्यते - ।

इति श्री फगवाड़ाख्य नगरवासि प्रभाकर ज्ञातीय गोविन्द राम ति

रचिते दयानन्दमतमर्द्दने द्वितीयः खण्डः समाप्तः शुभमस्तु-

॥ ❖ ॥ ❖ ॥

॥ ❖ ॥

॥

॥ ॐ श्रीगणेशाय नमः ॥

यत्तु मोक्षमूलरः प्रथममार्य्याणां परमेश्वरज्ञानं नासीत्पुनः क्रमाज्ज्ञानमिति-
मन्तव्यम् निष्कामकर्म्मोपासनानुष्ठानद्वारकान्तःकरणशुद्ध्युत्तरमेवशु
द्धबुद्धमुक्तसत्यस्वभावब्रह्मणो बोधस्य तमेतं वेदानुवचनेन ब्राह्मणा विवि
दिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेत्यादिश्रुतिभिः प्रतिपादनात् उपेय
प्राप्तेरुपायसाध्यत्वेनेश्वरयथार्थानुभवे कर्मानुष्ठानस्यैवोपायभूतत्वात्
अन्नमयाद्यनन्तरस्य ब्रह्मपुच्छं प्रतिष्ठेत्यनेन सर्वावधिभूतस्य ब्रह्मणः सर्व
भ्रमाधिष्ठानस्य निरूपणात्- ॥

यत्तु स एव छन्दोरूपवेदस्योत्पत्तेरेकत्रिंशच्छतवर्षाण्यतीतान्येकोनत्रिंश
च्छतवर्षाणि मन्त्रात्मकवेदोत्पत्त्यादिनिःसिद्धान्तयति हिरण्यगर्भः समवर्त
ताग्र इति अग्निः पूर्वेभिर्ऋषिभिरिति श्रुती च तत्र प्रमाणयति-
तन्न समञ्जसम् एतन्मन्त्रार्थापरिज्ञानात्- ॥

यत्तु दयानन्दः हिरण्यं ज्ञानं गर्भः स्वरूपं यस्य सूर्येन्द्रादिलोकाः यशोध
न्यवादश्च जीवश्च हिरण्यशब्दवाच्या गर्भे सामर्थ्ये यस्य स हिरण्यगर्भः परमे
श्वर इति तत्पथ्यं हिरण्यगर्भपदं व्याचष्टे- ॥

तदसत् गर्भशब्दस्य स्वरूपे सामर्थ्ये चाशक्तत्वात् सामर्थ्ये समर्थे निष्ठध
र्मात्मके जीवस्य सूर्यादेश्चावस्थितेर्वक्तुमशक्यत्वाच्च तस्मात् हिरण्यं ज्यो
तिः सूर्यो गर्भे मध्ये यस्य विराड्रूपस्य स हिरण्यगर्भो ब्रह्मेति व्याख्येयम् प्र
करणप्राबल्यात् अत्र निरुक्तं प्रमाणमस्ति तत्त्व कृतीतरद्धर्तन सामान्यादित्य

## दयानन्दमतमर्दनम्.

येमन्त्रार्थाभ्यूहोभ्यूढोपि श्रुतितस्तर्कतोनतु पृथक्त्वेनमन्त्रानिर्वक्तव्याः प्रकरणश एवतु निर्वक्तव्याः नह्येषुप्रत्यक्षमस्त्यनृषेरतपसोवापारोवर्य वित्सुतुखलुवेदितृषुभूयोविद्यः प्रशस्योभवतीत्युक्तम् पुरस्तान्मनुष्यावाऋषिषूत्क्रामत्सुदेवानब्रुवन्कोनऋषिर्भविष्यतीति तेभ्यएतं तर्कमृषिंप्रायच्छन्मन्त्रार्थचिन्ताभ्यूहमभ्यूढंतस्माद्यदेवकिञ्चा नूचानोभ्यूहत्यार्षंतद्भवति नि॰ अ॰ १३ खं॰ ५२ अस्याभिप्रायस्तु तत्सूक्तोक्तंप्रकृतिभिन्नं अप्रकृतमितियावत् नतुनिसाम्येनश्रवण मात्रेणतर्कमात्रेणचमन्त्राणामर्थः पृथक्पृथक्कल्पनीयः किन्तु प्रकरणानुरोधेनैवेति एवंच इतरेतराश्रयात् विशेष्यविशेषण तयासामान्यप्रतीतैर्वर्तमानानांमन्त्राणामर्थज्ञानचिन्तेत्यादि दयानन्दकृत विवरणंनिरस्तंवेदितव्यम् वाक्यस्यपदानांतत्तदर्थावबोधकत्वात्–

यत्तुअहमेवेश्वोवभूवेभवामिभविष्यामिचेत्यत्रवभूवेइतिसम्प्रयुक्ते–

तदशुद्धम् सत्तार्थकस्यभवतेरात्मनेपदित्वाभावात्– ॥

यत्तुकार[illegible]स्येः कार्य्यद्रव्यस्येःप्रमाणेः सहैवसमाधियोगेनेश्वरईश्वरइति तेरुच्यते– ॥

तदसाधुअग्निः सर्वेभिरितिमन्त्रव्याख्यायामुक्तयुक्तेरिति छन्दांसिवैदेवा वयोनाधाश्छन्दोभिर्हीदंसर्वंवयुनन्नद्धम् श॰ कां॰ ८ अ॰ २ एतावै देवताश्छन्दांसि श॰ कां॰ ८ अ॰ ३ एतेश्रुतीतुवेदस्यदेवतास्वरूपत्वा ततत्रसादसाधनत्वेनदेवताभावंवदतः गायत्रीवाइदंसर्वमितिओमित्येतदक्ष रमुद्गीथमुपासीतेति छान्दोग्योपनिषद्गतश्रुतिभ्यांगायत्रीप्रणवयोरीश्वरस्व रूपत्वात्तत्प्राप्तिसाधनतयातद्भावनिरूपणवत् एतेनसर्वविद्याद्योतकत्वा च्छन्दांसिदेवताशब्देनगृह्यन्तइतिनिरस्तम्– ॥

यत्तु अथकोयंवेदोनाममन्त्रभागसंहितेत्याह ब्राह्मणभागस्यनवेदसंज्ञापु राणेतिहाससंज्ञकत्वाद्वेदव्याख्यानादृषिभिरुक्तत्वादनीश्वरोक्तत्वात्कात्या यनभिन्नैऋषिभिर्वेदसंज्ञायामस्वीकृतत्वान्मनुष्यबुद्धिरचितत्वाच्चेतस्येति– तदज्ञानप्रलपितम् मन्त्रसंहितायाएववेदशब्दवाच्यत्वेमन्त्रभागोक्तेरनुपप

नत्वात् मन्त्रब्राह्मणयोर्वेदनामधेयमिति यज्ञपरिभाषायामापस्तम्बवाक्या
त् तथैवकात्यायनेनोक्तत्वाच्च मीमांसासूत्रकारेणश्रीभगवताजैमिनिना
अ-२ पाद-१ सप्तमाष्टमयोरधिकरणयोर्मन्त्रब्राह्मणात्मकवेदस्यप्रामा
ण्याद्व्यापनायमन्त्रब्राह्मणयोः स्वरूपस्यनिर्णीतत्वात् सप्तमाधिकरणमा
रचयति आधानइदमाम्नायते अहेबुध्नियमन्त्रंमेगोपायेति ऋगादिरूपेण
त्रिविधंमन्त्रभागमितिमन्त्रमित्यस्यार्थः तत्रमन्त्रस्यलक्षणंनास्ति अव्याप्त्य
तिव्याप्त्योर्वारयितुमशक्यत्वात् तथाहि विहितार्थाभिधायकोमन्त्रइत्युक्ते
वसन्तायकपिञ्जलानालभेतेत्यस्यमन्त्रस्यविधिरूपत्वादव्याप्तिः मननहे
तुर्मन्त्रइत्युक्तेब्राह्मणेतिव्याप्तिः असियदान्तोमन्त्रउत्तमपुरुषान्तोमन्त्रइ
त्यादिलक्षणानांपरस्परमव्याप्तिरितिचेन्नैवम्- ॥

याज्ञिकसमाख्यानस्यनिर्दोषलक्षणत्वात्- ॥

तत्रसमाख्यानमनुष्ठानस्मारकादीनांमन्त्रत्वंगमयति उरुप्रथस्वेत्यादयोऽ
नुष्ठानस्मारकाः अग्निमीलइत्यादयः स्तुतिरूपाः इषेत्वेत्यादयस्त्वान्ताः अ
ग्नआयाहिवीतयइत्यादयआमन्त्रणोपेताः अग्नीदग्नीन्विहरेत्यादयःप्रैष
रूपाः अधःस्विदासीदुपरिस्विदासीदित्यादयोविचाररूपाः अम्बेअम्बिके
अम्बालिकइत्यादयः परिदेवनरूपाः पृच्छामित्वापरमन्तंपृथिव्याइत्यादयः
प्रश्नरूपाः वेदिमाहुःपरमन्तंपृथिव्याइतिप्रभृतयउत्तररूपाः एवमन्य
दप्युदाहार्य्यम् ईदृशेषुविजानीयेषुसमाख्यानमन्तरेणनान्यःक
श्चिदनुगतोधर्मोऽस्तियस्यलक्षणमुच्यते लक्षणोपयोगस्तु ऋषयो
पिपदार्थानांनान्तंयान्तिपृथक्त्वशः लक्षणेनतुसिद्धानामन्तंयान्तिवि
पश्चितइति तस्मादभियुक्तानांमन्त्रोयमितिसमाख्यानेलक्षणम्-

अष्टमाधिकरणमारचयति चातुर्मास्येष्विदमाम्नायते एतद्ब्राह्मण
मेवपञ्चहवींषीति तत्रब्राह्मणस्यलक्षणंनास्तिकुतः वेदभागानाम
परिगणनादवधारणेनब्राह्मणभागेष्वन्यभागेषुचलक्षणस्याव्याप्त्यतिव्या
प्त्योः शोधयितुमशक्यत्वात् पूर्वोक्तमन्त्रभागएकःभागान्तराणिका
निचिन्त्यवैरुदाहर्तुं संङ्कुलीनानिहेतुर्निर्वचनंनिन्दाप्रशंसासंशयोविधिः

परक्रियापुराकल्पोव्यवधारणकल्पनेति तेह्यमन्त्रेकियतइतिहेतुः तद्
ध्नोदधित्वमितिनिर्वचनम् अमेध्यावैमाषाइतिनिन्दा- वायुर्वैक्षेपिष्ठादे
वताइतिप्रशंसा- तद्व्यचिकित्सज्जुहुवानी३माहौवाइमितिसंशयः
यजमानेनसंमितोदुम्बरीभवतीतिविधिः माषानेवमह्यंपचतीति परकृ
तिः पुराब्राह्मणाअभैषुरितिपुराकल्पः यावतोऽश्वान्प्रतिगृह्णीयात्ताव
तोवारुणांश्चतुष्कपालान्निर्वपेदितिविशेषावधारणकल्पना एवमन्यद
प्युदाहार्य्यम् नचहेत्वादीनामन्यतमंब्राह्मणमितिलक्षणम् मन्त्रेष्व
पिहेत्वादिसद्भावात् इन्द्रवोवामुशन्तिहीतिहेतुः उदानिषुर्महीरिति
तस्मादुदकमुच्यतइतिनिर्वचनम् मोघमन्नंविन्दतेअप्रचेताःसत्यंब्र
वीमिवधइत्सतस्य- नार्यमणंपुष्यतिनोसखायंकेवलाघोभवतिकेव
लादी ऋ० अष्ट० ८ अध्या० ७ व २३ मं १० अनु १० सू ११७ मं ६
इतिनिन्दा अग्निर्मूर्द्धादिवइतिप्रशंसा- अधःस्विदासी३दुपरिस्विदा
सी३दितिसंशयः वसन्तायकपिञ्जलानालभेतेतिविधिः- सहस्रम
युतंददानीतिपरकृतिः यज्ञेनयज्ञमयजन्तदेवाइतिइतिपुराकल्पः
इतिकरणबहुलंब्राह्मणमितिचेन्न इत्यददाइत्ययजथाइत्यपचइति
ब्राह्मणोगायेदित्यस्मिन्ब्राह्मणेऽनुगातव्येमन्त्रेतिव्याप्तेः इत्याहेत्यने
नवाक्येनोपनिबद्धंब्राह्मणमितिचेन्न राजाचिद्यंभगंभक्षीत्याह योमाय
तुंयातुधानेत्याहयेवावृत्ताःसुचिरन्नीत्याहेत्यनयोर्मन्त्रयोरतिव्याप्तेः आ
ख्यायिकारूपंब्राह्मणमितिचेन्नयमयमीसम्वादसूक्तादावतिव्याप्तेः त
स्मान्नास्तिब्राह्मणलक्षणमितिब्रूमः मन्त्रलक्षणस्यपूर्वमभिहितत्वात्
अवशिष्टवेदभागोब्राह्मणमित्येतल्लक्षणंभविष्यति तदेतल्लक्षणद्वयंजै
मिनिःसूत्रयामास- ॥

**तच्चोदकेषुमन्त्राख्याशेषेब्राह्मणशब्दइति- ॥ ॥**

तच्चोदकेषुतदभिधायकेषुवाक्येषुमन्त्रइतिसमाख्यासंप्रदायविद्भिर्व्यवह्रि
यते मन्त्रानधीमहइतिमन्त्रव्यतिरिक्तेभागेतुब्राह्मणशब्दस्तैर्व्यवहृतस्त
थः- यद्ब्राह्मणानीतिहासान्पुराणानिकल्पान्गाथानाराशंसीरितितद्

यत्तुप्रकरणे मन्त्रब्राह्मणव्यतिरिक्तत्वयेतिहासादीनां समाम्नानमतएव-नचब्राह्मणभागेपुराहकथनात्तस्येतिहासपुराणसंज्ञकत्वमितिशङ्क्यम्. ॥ * ॥

इन्द्रस्यनुवीर्याणिप्रवोचमिति ऋ. अ. २ सू. ३२ मन्त्रादारभ्यपञ्चदशभिर्ऋग्भिरिन्द्रवृत्रयोर्युद्धरूपेतिहासनिरूपणेन त्वंबलस्यगोमत इति ऋ. सू. ११ मं. ५ मन्त्रइन्द्रबलासुराहवाख्यायिकाभिधानेनच मायाभिरिन्द्रमायिनन्त्वंमुष्णामवातिरइति ऋ. सू. ११ मं. ७ मन्त्रेशुष्णासुरहननेतिहाससद्भावात् उतत्यञ्चमसमिति ऋ. सू. ३ अ. २ मं. ६ त्वष्टृकर्त्तृकचमसनिर्माणेतिहासप्रकाशनेन अष्ट ३ अध्या. ७ व. ५ मं. ४ अनु. ४ सू. ३४ ऋभुकर्तृकचमसनिर्माणप्रसङ्गस्यैकादशर्चस्यततोग्रिमेष्वपित्रिषुसूक्तेषु तस्यैवनिरूपणेनवइन्द्रोदधीचोअस्थभिर्वृत्राण्यप्रतिष्कुतः जघाननवतीर्नव अष्ट. १ अध्या. ६ मं. १ अनु. १४ सू. ८४ मं. १३ ऋग्वे. दधीचइतिहासस्यप्रकाशनेनअपांफेनेननमुचेःशिरइन्द्रोदवर्त्तयइति शु. य. अ. १९ मं. ७१ नमुचिवधेतिहासोद्घोषणेन यमयमीसंवादसूक्तस्यचप्रसिद्धत्वेनत्वन्मतेमन्त्रभागस्याप्यवेदतापत्तेर्दुर्निवार्य्यत्वात् ब्राह्मणानांमनुष्यप्रणीतत्वमपिनतत्रप्रमाणाभावात् वेदसंज्ञायामस्वीकृतत्वादितितुआप्योक्तम् संज्ञिनिसंज्ञायाअवस्थितिर्नतुसंज्ञायांसंज्ञिनइतिशास्त्रलोकयोःप्रसिद्धत्वात्. ॥

यत्तुयथाब्राह्मणग्रन्थेषुमनुष्याणांनामलेखपूर्वकालौकिकाइतिहासाः सन्तिनचैवंमन्त्रभागइति नचत्र्यायुषंजमदग्नेःकश्यपस्यत्र्यायुषमित्यादि य० अ. ३ मं ४२ मन्त्रेणजमदग्न्यादिनामानिसन्तीतिवाच्यम् जमदग्निकश्यपौनतत्रमनुष्यनाम्नीस्तः चक्षुर्वैजमदग्निर्ऋषिर्यदेनेनजगत्पश्यत्यथोमनुतेतस्माच्चक्षुर्जमदग्निर्ऋषिः श. ८ अ. १ कश्यपोवैकूर्मः प्राणोवैकूर्मः श० कां. ७ अ. ५ अनेनप्राणस्यकूर्मः कश्यपश्चसंज्ञाभिः शरीरस्यनाभौतस्यकूर्माकारावस्थितेरिति एतेनेन्द्रियप्राणानांत्रिशतवर्षायुः प्राप्त्यर्थमेविहाअंसोहिदेवाः श. कां. ३ अ. ७ इतिवचनात्

देवेषुविद्वत्सुविद्याप्रभावेणयत्त्रिशतवर्षमितमायुरस्तितन्नोऽस्त्वित्यनेन
यावदिति अतो न मन्त्रभाग इतिहासलेशोऽपिसायणाचार्यादिभिर्यत्रकुत्रापी
तिहासवर्णनंकृतंतत्सर्वममूलमेवेतिवदन्ति- ॥

तन्मन्दम् अङ्गिरसोनःपितरोनवग्वाअथर्वाणोभृगवःसोम्यासइति
यु· य· अ १९ मं ५० मन्त्रेअङ्गिरआदीनांअहंमनुरभवंसूर्य्यश्चाहंक
क्षीवानृषिरस्मिविप्रःअहंकुत्समार्जुनेयंन्यृञ्जेअहंकविरुशनापश्यत
मा· ऋ· अष्ट·३ अध्या·६ व १६ मं·४ अनु·३ सू २६ मं·१ अ
त्रमन्त्रेमन्वादीनांचदध्यङ्हमेजनुषंपूर्वोअङ्गिराःप्रियमेधाःकण्वोअत्रिर्मनु
र्विदुस्तेमेपूर्वे- मनुर्विदुस्तेषांदेवेष्वायतिरस्माकंतेषुनाभयस्तेषाम्पदे
नमहानमेगिराइन्द्राग्नीआनमेगिरा अ·२ अध्या·२ व·४ मं·१ अनु
२० सू १३४ मं·९ इहदध्यङ्ङादीनांनामश्रवणात् पूर्वोक्तेतिहासानां
मन्त्रभागउपलभ्यमानत्वाच्च आद्येजमदग्नेश्च दत्तरूपत्वनिरूपणम्
द्वितीयेब्राह्मणेकश्यपप्राणयोःकूर्मसाम्यप्रतिपादनमन्यथावेदस्य
वैयर्थ्यम् तृतीयेदेववत्सूज्यत्वाद्दिवुधानत्साम्यंप्रतिपादितम् अतोवे
दतात्पर्यानभिज्ञस्यतस्यवचनंहेयमेवसायणाद्युक्तएवार्थोयुक्तिसिद्ध:
यत्तुवदति वाषट्कर्वस्यनिगमइतिमन्त्रेघशाहूरणशेतिछन्दसिलुङि.
त्यादिपाणिनिसूत्रेभ्यश्छन्दोमन्त्रनिगमशब्दाःपर्यायाः-
तत्तुगायत्र्यादिछन्दसांशायोमन्त्रेष्वेवोपयोगाच्छन्दोमन्त्रयोर्मन्त्रभागे
शक्तिर्वेदस्तुत्यागमनिगमाम्नायादिशब्दानांमन्त्रब्राह्मणयोरुभयोरेवे
तिबोध्यम्- ॥

यत्तुब्राह्मणग्रन्थानामेवेतिहासपुराणसंज्ञास्तिनश्रीमद्भागवतादीना
म् यद्ब्राह्मणानीतिहासान्पुराणानीत्यादिवचनेषुब्राह्मणान्तर्गतान्ये
वेतिहासादीनिग्राह्याणि तस्माद्ब्राह्मणानीतिसंज्ञेइतिहासानित्यादि
संज्ञातद्यथाब्राह्मणान्येवेतिहासादीनिजानीयादितिब्रूते-
तन्न यद्ब्राह्मणानीतिवाक्येइतिहासादिरूपवाक्यानांयत्किञ्चित्पुरा
वृत्तप्रतिपादकानांमन्त्रब्राह्मणभागान्तर्गतत्वेऽपिनैतावतापुराणेति

हासा एव न सन्ति भागवतादयः पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दशेति याज्ञवल्क्येन स्वाध्यायं श्रावयेत्पित्र्ये धर्मशास्त्राणि चैव हि आख्यानानीतिहासांश्च पुराणानि खिलानि चेति मनुना च वेदातिरिक्तत्वेनेतिहासादीनां ग्रहणात् अत्र स्वाध्यायवेदशब्दग्रहणेनैव मन्त्रब्राह्मणान्तर्गतेतिहासादीनां ग्रहणे सिद्धे पुनस्तद्ग्रहणं श्रीभारतभागवतादीन्येव बोधयतीति धर्मशासनस्यापि वेदान्तःपातित्वेन धर्मशास्त्राणीति मानवादिधर्मशास्त्राणि ज्ञापयति अत एव इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् विभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यतीति भारतवाक्यं सङ्गच्छते यत्किञ्चित्कल्पनिरुक्तयोरपि मन्त्रब्राह्मणान्तर्गतत्वेन तदङ्गयोस्तयोरप्यसत्त्वस्वीकारापत्तेश्च नैत्तिरेयैतरेयकठशाखास्थानां हरिश्चन्द्रनाचिकेताद्युपाख्यानानां धर्मब्रह्मावबोधोपयुक्तानां तेषु तेष्वितिहासादिग्रन्थेषु स्पष्टीकरणाच्च उपनिषदुक्तसृष्टिस्थितिलयानां च तत्र तत्र स्फुटीकरणाच्च मन्वादिस्मृतिषु वेदोक्तसंध्यावन्दनादिविषयाणां प्रपञ्चनाच्चासामपि वेदार्थज्ञानोपयोगितया विद्यास्थानत्वम् तद्यथा तद्धह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः संध्यायां गायत्र्याभिमन्त्रिता आप ऊर्ध्वं विक्षिपन्तीति संध्यावन्दनविधिः पञ्च वा एते महायज्ञा महासत्त्रा इति पञ्चमहायज्ञविधिः एवं विध्यन्तराण्यपि तत्र तत्र द्रष्टव्यानि एवं न्यायमीमांसयोरपि प्रमाणप्रमेयादिषोडशपदार्थनिरूपणेनेदं वाक्यमस्मिन्नर्थे प्रमाणं न वेदित्यात्मकनिर्णयापादकत्वेन च विद्यास्थानत्वं युक्तम्-

छान्दोग्योपनिषदि प्रपा. ७ सनत्कुमारं प्रति नारदः- स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यामेतद्भगवोऽध्येमीति- ॥

अस्यार्थः श्रीशङ्कराचार्य्यैरेवमभिहितः वेदानांभारतपञ्चमानां वेदंव्याक
रणम् पित्र्यंश्राद्धकल्पम् राशिंगणितम् दैवमुत्पातज्ञानम् निधिंम
हाकालादिनिधिशास्त्रम् वाकोवाक्यम् तर्कशास्त्रम् एकायनम्
नीतिशास्त्रम् देवविद्याम् निरुक्तम् ब्रह्मविद्याम् ऋग्यजुःसामा
ख्यस्यविद्याः शिक्षाकल्पछन्दश्चितयः भूतविद्याम् भूततन्त्रम् क्ष
त्रविद्याम् धनुर्वेदम् नक्षत्रविद्यांज्योतिषम् सर्पविद्याम् गारुडम् दे
वजनविद्याम् गन्धयुक्तिनृत्यगीतवाद्यशिल्पादिविज्ञानानीतियुक्तो
यमर्थः वेदचतुष्टयस्यमन्त्रब्राह्मणात्मकस्यसर्वमुक्तत्वेनेतिहास
पुराणाभ्यामेवपञ्चसंख्यायाः पूरणात् अन्यथाव्याकरणादीनाम
प्यङ्गानांश्राद्धकल्पादीनांचनिधिशास्त्रप्रभृतीनांचवेदाभ्यन्तरस्य
त्वस्वीकारापत्त्याधर्मेब्रह्मणी वे दैकवेद्यइतिजैमिनिप्रणीतसूत्र वि
रोधापत्तेरनिवार्य्यत्वात्- ॥

पातञ्जलेमहाभाष्येयस्पशाह्निकेपठ्यते सप्तद्वीपावसुम
तीत्रयोलोकाश्चत्वारोवेदाः साङ्गाः सरहस्याबहुधाभिन्ना
एकशतमध्वर्युशाखाः सहस्रवर्त्मासामवेदएकविंशतिधा
बाह्वृच्यंनवधाथर्वणोवेदोवाकोवाक्यमितिहासःपुराणंवैद्यक
मित्येतावाञ्छब्दस्यप्रयोगविषयइति- ॥

अत्रसाङ्ग सरहस्यवेदानांपृथग्ग्रहणेनेतिहासपुराणवैद्यकशब्दैर्भारतश्री
भागवतादिपुराणस्यसुश्रुतचरकादिग्रन्थानामेवग्रहणमितिज्ञायते अत
एवतस्मिन्नेवाह्निके श्रीभगवतापतञ्जलिना बृहस्पतिरिन्द्रायदिव्यंवर्ष
सहस्रंप्रतिपदोक्तानांशब्दानांशब्दपारायणंप्रोवाचनान्तंजगामेतिब्राह्मण
श्रुतित्वेनोदाहारि- ॥

यत्तुन्यायदर्शनभाष्येवाक्यविभागस्यचार्थग्रहणात् अ०२ आ०२ सू०६०
इतिसूत्रभाष्येवात्स्यायनकृतेउक्तम् प्रमाणंशब्दोयथालोकेविभागश्चब्राह्म
णवाक्यानांत्रिविधः अस्यायमभिप्रायः ब्राह्मणग्रन्थस्थाः शब्दालौकिका
एवनवैदिकाइतिकथयति- ॥

ननूक्तम् तदर्थानवबोधात् यथा लोके विध्यर्थवादानुवचनात्मकानि वा
क्यानि विभक्तानि भवन्ति तथा परमात्मप्रणीतत्वेन प्रमाणशब्दभूतानां ब्राह्म
णभागस्थवाक्यानामपि त्रैविध्यम् तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वरूपल
क्षणलक्षितस्य सादृश्यस्य तद्भिन्न एव पर्यवसन्नत्वेन लौकिकवाक्यभिन्ना
नां वैदिकानामेव तत्रावश्यमभ्युपगम्यत्वात् मन्त्रभागेपि वसन्ताय कपिञ्ज
लानालभेतेत्यादौ विध्यादीनां यज्ञेन यज्ञमयजन्त देवा इत्यादौ पुरावृत्त
स्य च दर्शनात् अनधीतशास्त्रेणानेन कथं वेदभाष्यरचनमारब्धं कथं
च तस्य सत्यार्थप्रकाश इत्यभिधानं नोपहासास्पदमिति विदाङ्कुर्वन्तु वि
द्वांसः- ॥

यत्पुनः न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात् अ० २ आ०
२ सू० १ इति न्यायदर्शनभाष्यस्य सूत्रोपरि वात्स्यायनभाष्यम् इतिहो
चुरित्यनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमैतिह्यमिति अनेन प्रमाणेनापीइ
तिहासादिनामभिर्ब्राह्मणान्येव गृह्यन्ते नान्यदिति अभिधत्ते-

तदसमञ्जसम् मन्त्रभागेपि यदाहुरघ्न्या इति वरुणेति शपामह इति य०
अ० मं० अन्यदाहुर्विद्ययेत्यादि अन्यदाहुः सम्भवादिति य० अ०
४० मं० मन्त्रेष्वैतिह्यदर्शनेन सर्वस्यैव वेदस्येतिहासशब्दवाच्यत्वापत्तेः-
यत्तु ब्राह्मणानि वेदव्याख्यानान्येव सन्ति न वेदाख्यानि इषे त्वेत्यादि प्रतीक
मुपादाय शतपथे कां० १ अ० ७ व्याख्यानादिति- ॥

तन्मन्दम् उदानिषुर्महीरिति तस्मादुदकमुच्यत इति मन्त्रे व्याख्यानदर्शने
न मन्त्रभागस्याप्यवेदतापत्तेः नहि व्याख्यानव्याख्येययोरेककर्तृत्वं नेति
नियमोपि अथ शब्दानुशासनमिति महाभाष्यस्य वाक्ये अथेत्ययं शब्दोऽधि
कारार्थः प्रयुज्यत इत्यादिना पतञ्जलेरेव व्याख्यातृत्वदर्शनात् सिद्धान्तकौ
मुद्यास्तद्व्याख्यायामनोरमायाश्चैककर्तृकत्वस्यावगमाच्च किञ्च वेदव्या
ख्यानात्मके ब्राह्मणभागे लौकिकेतिहाससद्भावेन तेषामितिहासपुराण
संज्ञकत्वे व्याख्येयस्य वेदस्य तत्त्वं कुतो न व्याख्येयानुरोधित्वाद्व्याख्यानस्ये
त्यपि ध्येयम्- ॥

यत्तु स एव भिन्नत्याह महाभाष्ये वैदिकशब्दोदाहरणप्रदर्शनावसरे वेदादिमन्त्राः
प्रदर्शिताः लौकिकोदाहरणे यन्यसनसमये गौरश्वः पुरुषो हस्तीत्युदाहृतम्
गवादिशब्दा ब्राह्मणग्रन्थेष्वेव घटन्ते तेषामिह शब्दपाठव्यवहारदर्शनादिति
एतन्मूर्खजनरञ्जनमात्रम् प्रथमत्यागे मानाभावेन वेदादिमन्त्राणामेवो
दाहृतेर्युक्तत्वात् न च ब्राह्मणवाक्यानुदाहरणेन तेषां न निगमत्वमिति शङ्
क्यम् तदग्निममन्त्राणामनुदाहरणेन तेषामप्यवेदतापत्तेः आयङ्गौः पृश्नि
रक्रमीदिति यु. य. अ. मं. तस्मादश्वा अजायन्तेति सहस्रशीर्षा पुरुष इति
पुरुषसूक्तगमन्त्रयोर्गोऽश्वपुरुषशब्दानामुपादानेन मन्त्रभागस्यापि लौकि
कत्वापत्तेश्च — ॥

यत्तु नः स एवाभिधत्ते द्वितीया ब्राह्मणे पा. अ. २ पा. ३ चतुर्थ्यर्थे बहुलं
छन्दसि पा. अ. २ पा. ३ पुराणप्रोक्तेषु ब्राह्मणकल्पेषु पा. अ. ४ पा. ३
अत्रापि पाणिन्याचार्यैर्वेदब्राह्मणयोर्भेदेनैव प्रतिपादितम् तद्यथा पुरा
णैः प्राचीनैर्ब्रह्मादृषिभिः प्रोक्ता ब्राह्मणकल्पग्रन्था वेदव्याख्यानाः स
न्ति अत एवैतेषां पुराणेतिहाससंज्ञाकृतास्ति यद्यत्र छन्दोब्राह्मणयोर्वेद
संज्ञाभीष्टा भवेत्तर्हि चतुर्थ्यर्थे इति सूत्रे छन्दोग्रहणं व्यर्थं भवेत् कुतः द्वि
तीया ब्राह्मणे इति ब्राह्मणग्रन्थस्य प्रकृतत्वात् अतो ब्राह्मणानां न वेद
संज्ञा ब्रह्मभिर्ब्राह्मणैः प्रोक्तानि व्याख्यानानि ब्राह्मणानीति तदर्थः का
त्यायनवाक्यमप्रमाणमन्यानभिहितत्वादिति — ॥

तदेतत्सामादिकम् यजुष्युरइतियजुष्येकेषामिति द्वे वसुम्नयोर्यजुषिकाठ
क इति पा० अ० पा० सूत्रे यजुस्तदन्तर्गतकठशाखाग्रहणेन ऋगा
दित्रयस्य तदन्तर्गतकठशाखायाश्चानुपादाने नैतयोरप्यनिगमत्वापत्ते
स्त्वन्मतेऽभ्युपगन्तव्यत्वात् छन्दोब्राह्मणानि च तद्विषयाणीति पा. अ. पा.
सू. सूत्रे छन्दांसि ब्राह्मणानि च प्रोक्तप्रत्ययान्तानि तद्विषयाणि अध्येतृवे
दितृप्रत्ययं विना न प्रयोज्यानीत्यर्थके छन्दोब्राह्मणयोरुभयोरपि प्रोक्तप्रत्य
यान्तत्वनिरूपणेन तद्वीत्या पुराणप्रोक्तेषु ब्राह्मणकल्पेष्विति वत्काठकौपु
मादीनान्तत्तच्छाखाप्रवक्तृत्वेन छन्दोरूपवेदस्याप्यार्षत्व माधुनिकत्वं च प्रस

ज्येन तथाच यथा तत्र संप्रदायप्रवर्त्तनेन कठकलापाद्याख्यायिकोपपद्यतेन
यापुराणप्रोक्तेषु ब्राह्मणकल्पेष्वित्यत्रापि गतिरिति बोध्यम् मीमांसाशास्त्रकर्त्रा
भगवता जैमिनिना सर्वोऽप्ययं पक्षो महता प्रबन्धेन निराकृतोऽपि ततः संक्षेपतः
किञ्चित्प्रदर्श्यते - ॥

**वेदानां पौरुषेयत्वे पूर्वपक्षं सूत्रयति जैमिनिः - वेदांश्चैके स
न्निकर्षं पुरुषाख्याः अ॰ १ पा॰ १ ॥**

अस्यार्थः एके वादिनः वेदान्वेदानां सन्निकर्षं मन्यन्ते कालिदासादिग्रन्थसदृ
शा यत कृताः नेत्यत्र दृष्टान्ततया समुद्धीयन्ते वैयासिकं भारतमित्यादिवत्
काठकं कौथुमं तैत्तिरीयमित्येवम् नन्न हि दशाख्या कर्त्तृत्वेन काठकादिनामसमा
ख्यातत्वाद्वेदाः पौरुषेयाः नन्वनित्यानामेव सतां वेदानामुपाध्यायवत्संप्र
दायप्रवर्त्तकत्वेन काठकादिसमाख्यास्यादित्याशङ्क्य दोषान्तरं सूत्रयति -

**अनित्यदर्शनाच्च॰ २ ॥**

बबरो हालकाद्यनित्यपुरुषा वेदे श्रूयन्त इत्यर्थः मन्त्राणामविवक्षितार्थत्वे पू
र्वपक्षसूत्रम् - ॥

**अनित्यसंयोगान्मन्त्रानर्थक्यम् - ॥**

अस्यार्थस्तु किन्ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम् -
आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन्रन्धया नः १४ अ॰ अष्ट॰ ३ अ
ध्या॰ ३ व ११ मं॰ ३ अनु॰ ४ सू॰ ५३ मं १४ इति मन्त्रे कीकटो नाम जनपद
आम्नातः तथा नैचाशाखं नाम नगरं प्रमगन्दो नाम राजेत्येतेऽर्था अनित्या आम्ना
ताः तथा च प्राक् प्रमगन्दान्नायं मन्त्रोऽभूदिति गम्यते तथा सति मन्त्राणा
मर्थप्रत्यायनार्थोः किन्तूच्चारणार्थत्वाददृष्टार्था एवेति पूर्वपक्षसूत्राणि
तत्र सिद्धान्तं सूत्रयति - ॥

**उक्तन्तु शब्दपूर्वत्वम् अ॰ पा॰ सू॰ ॥**

तु अनित्यतावारकः वेदरूपशब्दस्य कठादिपुरुषेभ्यः पूर्वत्वमनादित्वं प्राची
नैरेव सूत्रैरुक्तम् औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्ध इत्यादिभिः सूत्रैरि
तियावत् का तर्हि काठकाद्याख्यायिकाया गतिरित्याशङ्क्योत्तरयति -

आख्याप्रवचनात् अ॰ पा॰ सू॰ ॥

सम्प्रदायप्रवर्त्तनान्नाप्युपपद्यत इति अनित्यदर्शनाच्चेति चोद्ये सिद्धान्तयति – ॥

परं श्रुतिसामान्यमात्रम् अ॰ पा॰ सू॰ ॥

अयमर्थः यत्काठकादिसमाख्यानं तत्प्रवचननिमित्तं यत्तु पर्णं बबरः प्रावाहणिरकामयतेत्यादौ बबरादिनित्यदर्शनं तच्छब्दसामान्यमात्रं न तु तत्राभिप्रेतो बबराख्यः कश्चित्पुरुषो विवक्षितः किन्तु बबर इति शब्दानुकृतिः तथा च नित्यः सन् बबरइति शब्दं कुर्वन्वायुरभिधीयते स च प्रावाहणिः प्रकर्षेण वहनशीलः एवमन्यत्राप्यूह्यम् अनित्यसंयोगान्मन्त्रानर्थक्यमिति पूर्वपक्षसूत्रस्योत्तरन्तु – ॥

उक्तश्चानित्यसंयोग इति सूत्रम् – ॥

अस्यार्थः प्रथमपादस्यान्तिमाधिकरणे सोयमनित्यसंयोग उक्तः परिहृतः इति एवं च जैमिनिप्रणीतसूत्रैः सह विरोधाद्दयानन्दोक्तिर्नादरणीया अपि च अभ्रिरसि नारिरसीत्यारभ्य त्रैष्टुभेन त्वा छन्दसाददु रितिमन्त्रआम्नातः तेनैव मन्त्रेण प्रतीतस्यादाने पुनर्ब्राह्मणेनाग्नुभि रभ्रिमादत्त इति विधीयते इति मन्त्रस्य विवक्षितार्थत्वे व्यर्थं स्यादित्याशङ्कोत्तरं जैमिनिः सूत्रयति – ॥

गुणार्थेन पुनःश्रुतिः अ॰ पा॰ सू॰ ॥

अस्यार्थः मन्त्रेण प्रतीतस्यैवार्थस्य ब्राह्मणे यत्पुनःश्रवणं तदेतच्चतुःसंख्यालक्षणकगुणविधानार्थत्वेनोपयुज्यते एतस्य विधानस्याभावे च तुर्णां मन्त्राणां मध्ये येन केनाप्येकेनाभ्रिरादीयेतेति अत्रेदं विचार्य्यम् ब्राह्मणानां वेदव्याख्यारूपत्वाभ्युपगमे एतत्सर्वपक्षे तत्पक्षयोरसाङ्कत्यम् विवरणे पुनःश्रुतिकथनस्य गुणविधायकत्वेन तन्निर्वहणस्यानुपपन्नत्वात् इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त इत्यत्र मन्त्रसामर्थ्यादेवाश्वस्य रशनादानस्य पुनर्ब्राह्मणवाक्यं विनियोजकमाम्नायते तन्मन्त्रस्य विवक्षितार्थत्वे व्यर्थमित्याशङ्क्य सूत्रितम् –

परिसंख्या अ० पा० सू० ॥

गर्द्भाभिधानीनादत्त इतिनिषेधः परिसंख्यातदर्थमिदंब्राह्मणवाक्यमितितदर्थः व्याख्यानरूपत्वेएतन्मतङ्गच्छतेसूत्रम् अन्यच्च पूर्वपक्षसूत्रम्- ॥

तदर्थशास्त्रात् अ० पा० सू० ॥

अस्यार्थः मन्त्रार्थाभिधायिब्राह्मणवाक्याद्विवक्षितार्थोमन्त्रः उरुप्रथस्वेतिपुरोडाशः प्रथयतीतिब्राह्मणम् तथाचमन्त्रस्याविवक्षितार्थत्वेऽपुविनियोगबोधनायब्राह्मणस्योपयोगेनमन्त्रेणैवतदर्थप्रतीतेर्ब्राह्मणस्यानर्थक्यात् सिद्धान्तसूत्रयति- ॥

अर्थवादोवा अ० पा० सू० ॥

अस्यार्थः वाशब्दोवैयर्थ्यंवारयति अस्त्यत्रार्थवादः यज्ञपतिमेवतत्प्रथयतीति तेनार्थवादेनसम्बन्धायब्राह्मणेविधिः पठ्यते ततप्रथयतीत्यनेनैवशब्देनप्रथममनूद्ययज्ञपतिमेवेत्यादिनार्थवादेनसंबद्धव्यन्तदेवप्रथनंकुतः प्राप्तमित्याशङ्क्योत्तरंसूत्रयति- ॥

मन्त्राभिधानात् अ० पा० सू० ॥

अध्वर्युः पुरोडाशमुद्दिश्यमन्त्रेप्रथस्वेत्येवमभिधत्ते तस्मादभिधानादध्वर्युकर्त्तृकंप्रथनंप्राप्तं यथायः कुर्वितिब्रूतेसकारयत्येव तथात्रापियः प्रथस्वेतिवक्तिसप्रथयत्येवेतितदर्थः अयमपिजैमिनीयचोद्यपरिहारात्मकसूत्रविरोधस्तन्मतमर्द्दकएव किञ्च द्विविधंब्राह्मणंविधिरर्थवादश्च- ॥

तथाचापस्तम्बः कर्मचोदनाब्रह्मणानिब्राह्मणशेषोर्थवादइति- ॥

विधिरपिद्विविधः अप्रवृत्तप्रवर्तकोज्ञातज्ञापकश्च तत्रकर्मकाण्डगताग्नेयादेरत्ववंपुरोडाशंनिर्वपतीत्याद्याः सर्वाविधयः ज्ञानकाण्डगताः सदेवसोम्येदमग्रआसीदित्याद्याश्चपराः जैमिनिश्चोदनासूत्रेविधिवाक्यंधर्मेप्रमाणमितिमतिन्याय औत्पत्तिकसूत्रेतत्प्रामा

एवं समर्थयामास व्यासोऽपि शास्त्रयोनित्वादिति सूत्रे वेदान्तानां ब्रह्मणि प्रामाण्यं प्रतिज्ञाय तत्तु समन्वयादित्यादिसूत्रैस्तत्समर्थयामास अर्थवादभागस्य प्रामाण्यनिरूपणप्रघट्टके जैमिनेः पूर्वपक्षसूत्रम्-

**आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते अ० पा० सू० ॥**

आम्नायस्य सर्वस्य क्रियाप्रतिपादनाय प्रवृत्तत्वादक्रियाप्रतिपादकानामर्थवादानां नास्ति कश्चिद्धि विवक्षितः स्वार्थः ते ह्यर्थवादा एवमाम्नायन्ते सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं नास्य विवक्षितोऽर्थः कश्चित् तस्मादिदं वाक्यमनित्यमुच्यते यद्यप्यनादित्वात्स्वरूपेणानित्यत्वं नास्ति तथापि धर्मावबोधलक्षणस्य नित्यकार्यस्याभावात् अनित्यैः काव्यालापैः समानत्वादप्रमाणमिति सूत्रार्थः सिद्धान्तसूत्रम्- ॥

**विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः अ० पा० सू०**

यदि ब्राह्मणानां वेदरूपता नाभविष्यत्तदा कथं जैमिनिरर्थवादरूपे ब्राह्मणे आम्नायशब्दं प्रायोक्ष्यत् एवं चापस्तम्बकात्यायनव्यासजैमिनिपाणिनिपतञ्जलिवात्स्यायनप्रभृतिभिः सूत्रभाष्यकृद्भिः स्मृतिप्रणेतृभिरन्यैश्च सर्वैः प्राक्तनाचार्यादिभिर्महानुभावैर्मन्त्रब्राह्मणभागयोरुभयोरपि वेदपदाभिधेयत्वाभ्युपगमेनाप्यनभिहितत्वादिति मदुक्तिर्निरस्तावगन्तव्या-

ननु पाणिन्याचार्यैर्मन्त्रब्राह्मणयोर्भेदेनैव प्रतिपादितमिति चेन्नाभाणि तदस्मदुक्तम् मन्त्रब्राह्मणयोरित्यत्र न लोके ति निषेधेन कर्तृकर्मणोरिति षष्ठ्या अप्राप्तेरिति प्रकृतमनुसरामः स यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निःश्वसितानीति श० त० अ० १४ प्रपा० ३ मैत्रेयीप्रति याज्ञवल्क्यस्य वचनात् महाभारतादीतिहासानां श्रीमद्भागवतादिपुराणानां विद्याप्रभृतीनां च श्रीपरमात्मप्रणीतत्वं स्पष्टमुपलभ्यते व्यासादयस्तु तेषां स्मर्तार एवेति यदीतिहासपु

णादीनामपीश्वरप्रणीतत्वं तदा किन्तु वक्तव्यं वेदब्राह्मणभागस्य तत्त्वम्
एतेन ब्राह्मणभागस्य मनुष्यबुद्धिरचितत्वादिति तदुक्तिः सर्वथा वेदार्था
भिज्ञैकरूपेयैवसह हतीदिशमनुव्यचलत् तमितिहासश्च पुराणं च गा
थाश्च नाराशंसीश्चानुव्यचलन्। इतिहासस्य वै स पुराणस्य च गाथानां च
नाराशंसीनां च प्रियं धाम भवति य एवं वेद अथर्व॰ कां॰ १५ प्रपा ३० अ
नु॰ १ मं॰ १ शतपथे अ ११ प्र॰ २ पिइतिहासपुराणानामीश्वरप्रणीत
त्वेन प्रामाण्यमुपलभ्यते तत एवावधार्य्य विस्तरभियानात्र लिख्यते तस्मा
त्कर्मचोदना ब्राह्मणानीत्याद्यापस्तम्बादिवाक्याद्ब्राह्मणस्येतिहासादि
संज्ञकत्वे प्रमाणाभावाद्भारतादय एवेतिहासादिपदवाच्या न ब्राह्मणा
नीति सिद्धम्। ॥

यत्तु महद्यक्षं भुवनस्य मध्ये तपसि क्रान्तं सलिलस्य पृष्ठे। तस्मिञ्छ्रय
न्ते य उ के च देवा वृक्षस्य स्कन्धः परित इव शाखाः अथर्व॰ कां॰ १० प्रपा २३
अनु ४४ मं ३८ अत्र सलिलस्य अन्तरिक्षस्य कारणरूपेण कार्य्यस्य
प्रलयानन्तरं पृष्ठे पश्चात् स्थितमस्ति तदेव ब्रह्म विज्ञेयमिति विवरणोक्ति
स्तन्नयुक्तं प्रतिभाति सलिलशब्दस्यान्तरिक्षाभिधायकत्वे प्रमाणानुप
न्यासात् वयन्तु सलिलशब्देनात्र जलस्य ग्रहणमिति वदामः श्रीविष्णो
र्जलशायित्वात् तथा च मनुः अ॰ १ श्लो ११ सोऽभिध्याय शरीरात्स्वात्
सिसृक्षुर्विविधाः प्रजाः अप एव ससर्ज्जादौ तासु बीजमवासृजत् त
था अ० १ श्लो॰ १३ आपो नारा इति प्रोक्ता आपो वै नरसूनवः ताय
दस्यायनं पूर्वं तेन नारायणः स्मृत इति तपसि क्रान्तमित्यस्य तपोनिष्ठ
मित्यर्थः तपस्तप्त्वासृजद्यन्तु स स्वयं पुरुषो विराडिति म॰ अ॰ १
श्लो ३३ मनुवचनात् अपि च अस्मिन्मन्त्रे इन्द्रादिदेवानां स्कन्धशा
खारूपेण ब्रह्मवृक्षस्य निरूपणम् न हि स्कन्धशाखाद्यास्तरोर्भिन्ना
भवन्तीति सिद्धान्तः समीहितम्। ॥

यत्तु तमिदं निगतं सहः इत्यादि अथर्वमन्त्रव्याख्यानावसरे वदति
व्यापकाद्ब्रह्मण्यस्य संयोगसम्बन्धात्वादिति। ॥

तदसुखम् व्यापकादित्यत्रपञ्चम्याअयुक्तत्वात् अपिच सजातीया
दिभेदत्रयशून्यस्याद्वयस्यानाकृतेः परमात्मनः संयोगित्वमपिनवक्तुंश
क्यते आधाराधेयभावस्यापिभेदएवदृष्टचरत्वेनभेदत्रयशून्यत्वकथ
नमपितन्मतेव्याहन्यतएवेति- सङ्कुध्वंसम्बद्धमित्यादिमन्त्रा
णांतत्कृतव्याख्यानन्तुसर्वथानिरङ्कुशप्रलापएवेत्युपरम्यतेनर्थ
कानर्थानेहोव्ययभियास्माभिरित्यलम्- ॥

आसीद्ब्राह्मणाग्र्याख्ययाधनपतिः प्राभाकरज्ञातिमान्-
फग्वाडापुरिवास्यगोत्रजउपाध्यायाधिकारैरतः- श्री
मट्ठाकुरदासनामकसुधीस्तस्यात्मजोभूत्कृती- गार्ह
स्थ्येपिसमर्पितंनिजमनोयेनेश्वरेहर्निशम् १ तस्मा
न्नौनिनिधिरायइत्यभिहितःप्रादुर्बभूवात्मजो- नीतंये
नसमुन्नतिंनिजकुलंधर्मार्थकामैःक्षितौ- देशेपञ्चन
देयशास्त्रिषुजनैर्यन्नामसङ्कीर्त्यते- ज्योतिर्वित्सुवरस्त
तोजनिसुसहीरामनामानघः २ ज्यायांस्तत्सुतयोरभू
त्त्रिरुपधिःश्रीकान्तचन्द्राह्वयः ज्येष्ठस्तत्सुतपञ्चकेह
मभवंगोविन्दरामाभिधः- दृष्ट्वाभिद्गुवचःप्रतारित
धियस्त्यक्तागमोक्तक्रियान्- मूढांस्तानुदयंसिषंश्रु
तिपथन्यस्तान्विधातुंमुदा ३ वेदाग्निनिध्यङ्कमितेहि
वर्षे- ग्रन्थोमयायंनृपविक्रमार्कात्- भौमेदशम्यामि
षशुक्लपक्षे- प्रादर्शिनिर्मायपुरेलवाद्ये ४ प्रार्थये
हंदयानन्दमतमर्दनसंज्ञके ग्रन्थेस्मिन्साहसंयन्मेक्षन्त
व्यंतत्कृपयाबुधैः ५ ॥ ✣ ॥ इतिश्रीफगवाडानग
रवासिप्रभाकरज्ञातीयद्विजगोविन्दरामकृतेदयानन्दमत
मर्दनेतृतीयःखण्डःसमाप्तः समाप्तोयंग्रन्थः शुभमस्तु
श्रीरस्तु कापीलिखितंशङ्करनाथेनकाश्मीरिणापण्डिते
नेतिशिवम् ✣ संवत् १९३५ में छपी.

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध | पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|---|---|
| २५ | ५ | हिंःसायां | हिंसायां | ३६ | २० | सुपलक्षते | मुपलक्ष्यते |
| २५ | १२ | नुष्ठार्थ्य | नुष्ठार्थं | ३७ | ४ | र्मिविष्यति | र्भविष्यति |
| २६ | १२ | घामभिः | धामभिः | ३९ | १७ | द्रात्तला | द्रात्तसा |
| २७ | २६ | अष्ठ | अष्ठि | ४० | ७ | मुष्ठानु | नुष्ठानु |
| २८ | १ | गन्तारंम् | गन्तारम् | ४० | २६ | वन्दितः | नन्दितः |
| २८ | ३ | अत्रेन्द्रस्य | अत्रस्य | ४१ | ५ | एतरेपि | ऐतरेपि |
| ३० | १ | अपा | अपां | ४२ | १७ | वाक्यानुप | वाक्यानुप |
| ३१ | १ | वंसना | हंसना | ४४ | २२ | द्यौशान्ति | द्यौः शान्ति |
| ३१ | ५ | शोभम | शोभन | ४५ | १२ | वहूनि | वहूनि |
| ३१ | २२ | सामीप्येन | सामीप्येन | ४७ | १ | वस्यितिक | वस्यितिःक |
| ३१ | २५ | जघ्काने | जघाने | ४७ | १४ | वागाकारे | वाग्गाकारे |
| ३२ | २५ | नयेन | रथेन | ४८ | ६ | अ०४ मं०८ | अ ४० मं ०८ |
| ३३ | ६ | सुकर्णा | सुवर्णा | ४९ | १४ | मनन्ते | मनन्तं |
| ३३ | १६ | परिघां | परिघा | ५० | १० | सुखोपल | सुखोपल |
| ३४ | ८ | विरुद्धोनेति | विरुद्धोनेति | ५० | १३ | सद्धान० | सद्धान |
| ३४ | ९ | यवन | यवन | ५० | १९ | यद्दयानंद | यद्दयानंद० |
| ३४ | १८ | कुःस्य | कुःस्याया | ५५ | २ | ब्राह्मणेन | ब्राह्मणेन |
| ३४ | १८ | तदुक्ति | तदुक्तेः | ५५ | ४ | दर्शनाच्च | दर्शनाच्च |
| ३४ | २१ | मशाकं | मशाक्य | ५५ | १७ | व्यादक्षते | व्याचक्षते |
| ३४ | २३ | दृष्टा | दृष्ट्वा | ५६ | २ | एतरेय | ऐतरेय |
| ३४ | २३ | तत | तत्र | ५६ | ११ | श्रुतंत्वात् | श्रुतत्वात् |
| ३५ | ५ | विद्यादिव्य | विद्यादिदिव्य | ५७ | ६ | दृश्येत | दृश्यते |
| ३५ | २६ | परेम | परेन | ५७ | २६ | क्रियायार्थो | क्रियार्थो |
| ३५ | १८ | मेवार्थं | मेवार्थ्य | ५८ | ८ | वंस्यति | वस्यति |
| ३५ | २३ | दित्यत्र | दित्यइति | ५८ | १४ | त्यवत् | त्यन्निवत् |
| ३६ | ११ | ननु | ननु | ५९ | ५ | प्रमाणयेन | प्रामाण्येन |
| ३६ | १८ | लंकूार | लक्कार | ५९ | १६ | यमदेड्रेष्य | यमनदड्रेष्य |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध | पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|---|---|
| ५९ | १८ | रश्मिहिता | रश्मिहिता | ७१ | १७ | आवस्य | भावस्य |
| ५९ | २५ | किञ्चिना | किञ्चना | ७१ | १९ | निम्रीयते | निम्रीयते |
| ५९ | २६ | कट | कठ | ७१ | २५ | देवताःसन्नीति | देवताःसन्नीति |
| ६० | १ | मन्त्रेनं | मन्त्रेणं | ७२ | ७ | मदतितत्वस्य | तदतितत्वस्य |
| ६० | १ | त्रिन्द्राकः | त्रिन्द्रएकः | ७२ | ९ | कतेनव | कतेनच |
| ६० | २६ | आभू | आभूव | ७२ | २६ | यत्र | यत्र |
| ६१ | १७ | भवेतदा | भवेत्तदा | ७५ | १४ | कियन्न | कियन्न |
| ६३ | ८ | स्रजननिति | स्रजनति | ७६ | १० | वायुश्चःपवते | वायुःपवते |
| ६३ | १२ | तांकुल्य | तांकुल्य | ७६ | ११ | मध्यन्द्रो | मध्यन्द्रो |
| ६३ | १४ | मृत्युतरण | मृत्युतरण | ७६ | १८ | गूढा | गूढः |
| ६३ | १८ | पते | पतेः | ७६ | २० | माग्रेयेहवि | माग्रेयंहवि |
| ६३ | २४ | आ० | ५ आ० | ७७ | ६ | बहरपते | बहूरपते |
| ६३ | १९ | स्यम्रुतिः | स्याम्रुतिः | ७७ | १२ | मधुञ्जते | मधुञ्जते |
| ६४ | १४ | महान्नल | महानल | ७७ | २६ | त्र्यो | त्र्यो |
| ६४ | १६ | यस्यशा | यस्यशा | ७८ | ३ | स्वार्थ | स्वार्थे |
| ६५ | ८ | मम्भ्याघात् | मम्भ्याघात् | ७९ | २० | करिष्यन्निति | करिष्यन्निति |
| ६५ | १२ | सर्वस्यैवा | सर्वस्यैवा | ७९ | २६ | गत्र | यत्र |
| ६५ | १९ | कथमा | कथना | ८१ | ६ | दीनांधिकारते | दीनांदीशा धिकारते |
| ६६ | २४ | नावमम्भं | नावस्मभं | | | | |
| ६७ | १६ | तिस्रा | तिस्रो | ८१ | १२ | यागेन्द्र | यागेन्द्र |
| ६८ | २२ | यत्रं | यत्र | ८२ | १ | दसन्तिपित्रोः | दसतिपित्रोः |
| ६९ | २० | छन्दसापि | छन्दसोपि | ८४ | ११ | नास्तदेवता | नास्तदेवता |
| ७० | ४ | निष्पन्ना | निष्पन्ना | ८५ | २१ | पिख्याताः | पिख्याख्याता |
| ७० | ६ | सम्बन्धा | सम्बन्धा | ८६ | १५ | भाष्य | भाष्ये |
| ७१ | १५ | पितरणा | पितृणा | ८६ | २१ | प्राय | पाय |
| ७१ | १६ | मावाहन | मावाहन | ८७ | ४ | वमात्मविदी | वनात्मविदी |

| पृष्ठ | पंक्ति | अशुद्ध | शुद्ध | पृष्ठ | पंक्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|---|---|
| ८७ | ७ | नात्मविलात् | नात्मविलान् | ९६ | ३ | धर्मात | धर्मवत |
| ८७ | २२ | नप्रमदित | नप्रमदित | ९७ | ५ | तेषा | तेषां |
| ८८ | ७ | तन्निरस्य | तन्निरस्य | ९७ | ७ | अ. मं. | अमं. मंत्रे |
| ८८ | ७ | शावभ्रमा | शोवभ्रमा | ९८ | ८ | मित्याविवत् | मित्यादिवत् |
| ८९ | १० | चिनेत्यादि | चिन्नेत्यादि | ९८ | १२ | ह्यालिका | ह्यालिका |
| ८९ | १४ | प्रमाणौ: | प्राणौ: | ९९ | १७ | अनोभरा | अनोभर |
| ९० | ५ | आधान | आधान | ९९ | १ | मवचमात् | प्रवचनात् |
| ९० | ११ | यज्ञिक | याज्ञिक | | | | |
| [illegible] | १६ | [illegible]मि | प्रवक्ष्यामि | ९९ | २४ | त्यम्बा | त्यम्बा |
| ९० | १७ | इदंब्रह्मेतय | इदंब्रह्मेतय | | | | |
| [illegible] | २३ | ब्राह्मणामेव | ब्राह्मणान्ये | १०० | १४ | नदव | नदेव |
| [illegible] | [illegible] | संकृ[illegible]तानि | संकृ[illegible]तानि | १०२ | १६ | नोत्र | नात्र |
| [illegible] | १५ | [illegible] | पठ्य | १०२ | २४ | सिद्धना: | सिद्धन्नः |
| ९८ | २७ | मिचेत्र | मितिचे | | | | |
| ९१ | २६ | रितितह्म | रितिब्रह्म ने | १०२ | ११ | नैमिनिधि। | नौनिधि। |
| ९२ | २ | उरावृक्ष | प्रुरावृत्त | १०३ | १४ | नामानघ: | नामानघ: |
| ९२ | ११ | दधीवो | दधीचो | १०४ | २३ | उचित्तहै | उचितहै |
| ९२ | २३ | बा. ८ अ. १ | बा. कां. ८ अ. १ | | | | |

इति अशुद्धशुद्धपत्रं समाप्तम्

श्रीगोविन्दरामविरचितं शुभम्

संवत् १९३५

सन् १८७८ ई०

छपा

## आवेदन

सज्जनपुरुषोंकोविदितहो कि यह दयानन्दमतमर्दननामापुस्तक बड़ेपरिश्रमसेरचागयाहै और यहपरिश्रमइसलियेकियागयाहै कि महात्माविद्वान्लोक जिनकोवेदशास्त्रकायथावत्परिज्ञानहै इसकोदेखकरजानलें कि योपण्डितदयानन्दसरस्वतीसाहिब सनातनधर्मकेविषयमें और वेदकेविषयमें लिखते और कहतेहैं वहसर्वथामिथ्याहै और स्वकपोलकल्पितहै इसपुस्तकबनानेकापरमप्रयोजनयहहै कि महात्माविद्वान्लोग इसपुस्तकमेंजोयुक्तिहै और अन्यसद्युक्तियोंसेअपनेसुहृदलोगोंको और पार्श्ववर्त्तीलोगोंको और सेवकप्रभृतिकोऐसाउपदेशकरें जिससेउनकेऊपरअपनेयथावद्धर्मकामूल और कृत्रिमधर्मोंकापरिज्ञानप्रगटहो— और जिनअनभिज्ञलोगोंकेचित्तोंमें धोकखेकागर्दउबारास्थिरहोरहाहै इसअमृतरूपव्याख्यानकीवर्षासेप्रक्षालितहोकर चित्तउनकाशुद्ध और निर्मलहोजावे—

और प्रगटहो कि इसपुस्तककातर्जमाउरदूमेंहोरहाहै सबलोगोंके उपकारकेलीये उसकेभीमुद्राङ्कितकरानेकीइच्छाहै परन्तु जबतक दोसौग्राहक एतदर्थस्वनामाङ्कितअपनापत्रनाभेजें तबतकयहकामप्रारम्भनहींकियाजाता इसवास्ते सबसत्पुरुषोंकेआगेप्रार्थनाहै इसश्रेष्ठकार्यमेंसहायकहोकर अपनीदरखास्तें पण्डितजीकेपासभेजदें दरखास्तोंका ३ मासतक प्रतीक्षणकरेंगे—

## विज्ञापन सर्वत्र ग्राहकोंको

यह पुस्तक मूल्यपर श्रीपण्डितगोविन्दरामजीसे जो सरकारी अपर स्कूल लाहौरके संस्कृताध्यापकहै मिलसकताहै मूल्य डाकमहसूल सहित ।।) आठआने इसपुस्तककादेखनासर्वत्रमनुष्योंकोलाजम और उचितहै ॥

सन १८७८ ईस्वीमें छपी·

॥ ॥

॥